# I HAVE 14 BEST FRIENDS TO HELP ME TOP MY CLASS

H to 6H for Linework
Apsara DRAWING





B to 6B for Shading
Apsara DRAWING




HB for Writing
Apsara DRAWING

Apsara Drawing Pencils come in 14 grades and help me in so... so many subjects. My classmates also include Apsara Poster Colours, Water Colour Tubes, Oil Pastels and Wax Crayons. All, toppers.



**Apsara®**
DRAWING PENCILS

For information, write to:
**Hindustan Pencils Limited,**
510, Himalaya House, Bombay-400 001.

जिज्ञासा –

# चित् चन इत्येतयोः अर्थः

शिष्यः- श्रीमन्! चित्-चन इत्येतयोः कः अर्थः?

आचार्यः- अनिर्दिष्टार्थकत्वं तयोः।

शि - तयोः अर्थभेदः कोऽपि अस्ति वा?

आ - न। 'चित्' इत्यस्य यः अर्थः स एव अर्थः 'चन' इत्यस्य अपि।

शि - तौ किं प्रत्ययौ?

आ - न, तदुभयम् अपि अव्ययम्। प्रश्नवाचकेन युक्तं तदुभयम् अनिर्दिष्टार्थकत्वं द्योतयति।

शि - कश्चत्, काचित्, केनचित्, कस्यैचित् इत्यादिषु पूर्वपदस्य विभक्तिः दृश्यते। तर्हि किं तत्र अलुक्समासः?

आ - वस्तुतः तत्र समासः एव न। सविभक्तिकः किंशब्दः एकं पदम्। चित् इति अपरं पदम्। एवं तत्र पदद्वयम् एव।

शि - पदद्वयं चेत् किमर्थं ते (सविभक्तिकः किंशब्दः, चित्/चन च) सहैव उच्चार्येते?

आ - रूढिरेव तत्र कारणम्। एवं पृथक्पदत्वे अपि यत्र सहप्रयोगः दृश्यते तस्य 'अनुप्रयोगः' इति नाम।

शि - उपसर्गाः[1] धातोः पूर्वं, प्रत्ययाश्च[2] धातोः (शब्दस्य वा) अनन्तरं सहैव नियतरूपेण प्रयोक्तव्याः इत्यत्र यथा सूत्रप्रामाण्यम् अस्ति तथा अनयोः सहोच्चारणे किमपि प्रामाण्यं स्यात् वा?

आ - नैव। अनुप्रयोगे शिष्टानां प्रयोगः एव प्रमाणम्।

शि - श्रीमन्! 'कस्मिंश्चित् ग्रामे कश्चन निर्धनः आसीत्' इत्येवंरूपेण वाक्यानि प्रयुज्यन्ते खलु? तस्मिन् एव अर्थे 'एकस्मिन् ग्रामे एकः निर्धनः आसीत्' इत्येवं प्रयुज्यते चेत् को दोषः?

आ - प्रायः अत्र दोषः इति न। औचित्यस्य प्रश्नः अत्र। तदस्तु, एकशब्दस्य कः अर्थः?

शि - एकशब्दः विशेषणम्। एकत्वसङ्ख्याविशिष्टत्वम् इति तस्य अर्थः।

आ - विशेषणानि इतरव्यावर्तकानि भवन्ति। यथा 'श्वेतं वस्त्रम्' इत्युक्तौ श्वेतशब्दस्य बलात् वस्त्रस्य कृष्ण-रक्त-नीलादियुक्तत्वं निवार्यते (श्वेतत्वं च द्योत्यते) तथैव सङ्ख्याप्रयोगात् तदितरसङ्ख्यायुक्तत्वं निवार्यते।

शि - तन्नाम 'एकः निर्धनः' इत्युक्तौ द्वित्व-त्रित्वादियुक्तत्वं निवार्यते?

आ - आम्। अत एव 'एकः निर्धनः आसीत्' नाम 'अन्यः न आसीत्' इत्यपि अर्थः भासेत वा इति मम सन्देहः।

शि - 'अन्यः न आसीत्' इति अर्थः भासते इति किमर्थं वक्तव्यम्? निर्धनगतम् एकत्वं भासते इति एतावान् एव अर्थः इति कुतो वा न वक्तव्यम्?

आ - सङ्ख्या तु विशेषणम्। विशेषणानाम् इतरव्यावर्तकत्वं धर्मः। अंतः एकशब्दस्य प्रयोगे द्वित्वादिकं निवार्यते इति अवश्यं वक्तव्यं भवति एव। अन्यच्च एतादृशे सन्दर्भे एकत्वविशिष्टत्वं न अभिप्रेतम्। एकत्वं तु एकवचनात् एव ज्ञाप्यते। अनिर्दिष्टार्थकत्वम् अभिप्रेतम्। अतः कश्चित्, कस्मिंश्चित् इत्येव प्रयोक्तव्यम्।

शि - श्रीमन्! एकशब्दस्य एकत्वं केवलम् अर्थः इति नास्ति खलु? एकशब्दस्य बहवः अर्थाः सन्ति। अनिर्दिष्टार्थकत्वम् अपि कुतः तस्य न स्यात्?

आ - एतया दृष्ट्या अपि चिन्तितं मया। कोषे एकशब्दस्य अर्थाः परिशीलिताः। तस्य बहवः अर्थाः सन्ति इति तु सत्यम् एव। 'स्त्रीसंख्यानं चाप्सरस्तीर्थमारादुत्क्षिप्यैनां ज्योतिरेकं जगाम' इति शाकुन्तलप्रयोगे (५-३०) एकशब्दस्य अनिर्दिष्टार्थकत्वम् इति लिखति कश्चन कोषकारः। किन्तु एतावता अपि मम तृप्तिः न जाता।

शि - 'एकस्मिन् ग्रामे एकः निर्धनः आसीत्' इति न प्रयोक्तव्यम् इति भवतः आशयः वा?

आ - तथा न। एतादृशस्य प्रयोगस्य अपेक्षया 'कस्मिंश्चित् ग्रामे कश्चन निर्धनः आसीत्' इति प्रयोगः उचिततरः इति एतावत् एव वक्तुं शक्नोमि सद्यः।

---

1. ते प्राग्धातोः – (१-४-८०) 2. परश्च – (३-१-२)

* *

# धनसाहाय्यं कर्तुं शक्नोति वा?

| | |
|---|---|
| राजीवः - सुरेश! भवतः गृहं प्रति एव प्रस्थितः आसम्। तावता भवान् मिलितः। | Suresh, it is really very nice that you came. I was in fact trying to go to your place to see you. |
| सुरेशः - कः विशेषः? | What is the matter? |
| रा - भवान् मह्यं किञ्चित् धनसाहाय्यं कर्तुं शक्नोति वा? | Can you help me with some money? |
| सु - कियत् धनम् आवश्यकम्? | How much do you need? |
| रा - सार्धैकसहस्रम्। | Thousand five hundred. |
| सु - कदा आवश्यकम्? | When do you want it? |
| रा - अद्यैव सायङ्कालात् पूर्वम्। वस्तुतः तु गतसप्ताहे एव कुतश्चित् द्विसहस्रं रूप्यकाणि आगन्तव्यानि आसन्। किन्तु अद्यापि सः स्वीकर्ता एव न दृश्यते। | This evening. I should have in fact received two thousand rupees from some one last week, but the man is not to be seen till today. |
| सु - किन्तु सार्धैकसहस्रं पूर्णतः दातुं शक्नोमि वा न वा? | I may not able to spare all the thousand five hundred. |
| रा - कियत् दातुं शक्नोति? | How much can you give? |
| सु - सहस्रं निश्चयेन दास्यामि। आगच्छतु मया सह गृहम्। गृहे परिशील्य कियत् दातुं शक्यते इति वदामि। | Thousand rupees positively, but come along let me check up and see how much more I can give. |
| रा - भवान् कुत्रापि प्रस्थितः आसीत् ...। | You seem to be going somewhere! |
| सु - त्वरया करणीयं कार्यं न तत्। | It is nothing urgent. |
| रा - वेतनप्राप्तिसमनन्तरम् एव ...। | After getting my salary I will ....... |
| सु - प्रत्यर्पणं कदा इति केन पृष्टम्? सङ्कोचशीलः भवान् मां धनं कथं पृष्टवान् इत्येव मम आश्चर्यम्! | I never asked you about when you will repay! On the contrary I am wondering how a shy man like you could go to someone for money! |

# चन्दमामा

संस्थापकः– 'चक्रपाणिः'   सञ्चालकः– 'नागिरेड्डी'


## शुष्यन् अस्ति महासागरः!

'प्रपञ्चस्तरे महासागरेषु षष्ठे स्थाने स्थितः कश्चन महासागरः विंशतिवर्षाभ्यन्तरे – तन्नाम २०१० तमवर्षात् पूर्वं – शुष्कः भविष्यति' इत्यत्र विश्वसन्ति वा भवन्तः? भवतां विश्वासः तत्र भवतु वा मा वा, एषा तु वस्तुस्थितिः। रशियादेशस्य अरलसागरस्य पादोनभागः शुष्कः जातः अस्ति।

पूर्वम् अमुदार्या-सिरदार्यानामिके द्वे नदी एतं सागरं प्राप्नुतः स्म। कृष्यर्थम् एतयोः नद्योः उपयोगः स्वीकरणीयः इति उद्देशेन सेतुबन्धद्वारा मध्यैशियास्थां मरुभूमिं प्रति एतयोः प्रवाहः नीतः। तत्समये कोऽपि न चिन्तितवान् आसीत् यत् महासागरः कश्चन शुष्कः भवेत् इति। मध्यैशियाक्षेत्रेषु इदानीं महता प्रमाणेन कार्पासः प्रवर्ध्यमानः अस्ति। अतः एतयोः नद्योः जलं यथापूर्वं सागरं प्रति प्रेषयितुम् अपि न शक्यते।

इदानीं रशियादेशे नूतनं चिन्तनम् उदितं दृश्यते। अतः वयम् आशास्महे यत् प्रपञ्चस्य विशेषज्ञानां साहाय्येन अरलसागरः शुष्कः यथा न स्यात् तथा कर्तुं कोऽपि उपायः आश्रियेत इति।

शुष्कीभवन् अरलमहासागरः प्रपञ्चस्थान् अस्मान् बोधयति यत् प्रकृतिविरुद्धं पदस्थापनतः पूर्वं विशेषजागरूकता दूरदर्शिता च भवतु इति।


सम्पुटः–७   जुलै–१९९०   सञ्चिका–४

प्रतिकृतिमूल्यं रू. ३-०० * वार्षिकं ग्राहकशुल्कं रू. ३६-००









# राज्यप्राप्त्यर्हता

कमलपुरनामकं राज्यं पूर्वं कीर्तिसेनः नाम राजा पालयन् आसीत्। तस्य शौर्यं धैर्यं च अद्वितीयम् आसीत्। तथापि सः शान्तिप्रियः। तस्य शासनकाले जनाः सुखेन तृप्त्या च जीवन्ति स्म। कीर्तिसेनस्य पत्नी प्रियंवदा। बहोः कालात् अनन्तरम् अपि तयोः अपत्यं न जातम्। प्रियंवदया व्रतपूजनादिकं बहुधा कृतम्। तथापि तस्याः सौभाग्यं न फलितम्।

'यदि कुलपरम्परा विच्छिन्ना न भवेत् इति अस्ति तर्हि राज्ञः द्वितीयः परिणयः एव उचितः मार्गः' इति आलोचितवती प्रियंवदा। अतः सा महता अनुरोधेन राजानम् अङ्गीकारितवती। अनन्तरम् अल्पे एवं काले राज्ञः द्वितीयः विवाहः प्रवृत्तः। राज्ञः द्वितीयपत्न्याः नाम प्रभावती इति। कालः गतः। प्रभावती एकं पुत्रं प्रसूतवती। एतेन राजा प्रियंवदा च नितरां सन्तुष्टौ। तस्य पुत्रस्य नाम विजयः इति निश्चितम्। पुनः किञ्चित्कालस्य अनन्तरं प्रियंवदा अपि पुत्रं प्रसूतवती। प्रियंवदायाः पुत्रस्य नाम आदित्यः इति।

दिनानि गतानि। विजयः आदित्यः च प्रतिपच्चन्द्रः इव दिने दिने प्रवर्धेते। तौ गुरुकुले निवसन्तौ उचितां विद्याम् अभ्यस्तवन्तौ। विद्याभ्यासं समाप्य गुरोः आशीर्वादं प्राप्य राजधानीं प्रत्यागतवन्तौ तौ राजकुमारौ। तौ दृष्ट्वा राजा नितरां सन्तुष्टः।

राजा कीर्तिसेनः वार्धक्यं प्राप्तवान् अस्ति। राज्ञः पुरतः इदानीं समस्या– कः राजकुमारः सिंहासने उपवेशनीयः इति। ज्येष्ठराज्ञ्याः पुत्रः उत्तराधिकारी भवेत् इति तु सम्प्रदायः। किन्तु ज्येष्ठराज्ञ्याः पुत्रः आदित्यः कनिष्ठराज्ञ्याः पुत्रस्य विजयस्य अपेक्षया अपि वयसा कनिष्ठः।

"सुभद्रा"

निवेदितवन्तौ यत् आवां शत्रुराजेन सह युद्धार्थं गच्छावः इति।

तदा राजा कीर्तिसेनः तौ राजकुमारौ उक्तवान्– "शत्रुः सहस्राक्षः न सामान्यः। सः महाबलशाली। अतः तं सुलभतया जेतुं न शक्यते" इति।

एतत् श्रुत्वा विजयः उक्तवान्– "तात! भवतः पुत्रौ सामर्थ्यहीनौ युद्धात् भीतौ वा न। भवतः कथनमात्रेण तौ रणरङ्गगमनात् विमुखौ न भवतः च" इति।

"आम्। जयो वा भवतु पराजयः वा, आवां युद्धं करिष्यावः एव" इति उक्तवान् आदित्यः।

राजा कीर्तिसेनः शान्तेन स्वरेण उक्तवान्– "समस्यायाः परिहारार्थं शान्ततया जागरूकतया च चिन्तनं करणीयम्। विवेकः कदापि न परित्यक्तव्यः। देहबलं सदापि साहाय्यकं भवितुं न अर्हति इति स्मर्तव्यम्" इति।

एतत् श्रुत्वा उभौ अपि राजकुमारौ मौनम् आश्रितवन्तौ। एतावता एव कश्चन द्वारपालकः आगत्य राजानं निवेदितवान्– "महाराज! भवतः दर्शनार्थं मन्त्रपालः नाम पण्डितः आगतः अस्ति" इति।

'मन्त्रपालम् अन्तः प्रेषयतु' इति द्वारपालकम् उक्तवान् राजा। अल्पे एव काले मन्त्रपालः अन्तः आगतः। सः राजकुमारौ दृष्ट्वा एकैकम् अपि आशिषा



अतः इदानीं किं करणीयम् इति गाम्भीर्येण चिन्तयन् अस्ति राजा। तेषु एव दिनेषु हिमगिरिराज्यस्य राजा सहस्राक्षः कमलपुरस्य उपरि आक्रमणार्थं सन्नाहं कुर्वन् आसीत्। सहस्राक्षः प्रबलः राजा। कीर्तिसेनः तु वार्धक्यकारणतः सामर्थ्यहीनः जातः अस्ति। कीर्तिसेनस्य पुत्रौ विजयः आदित्यः च बलशालिनौ इति तु सत्यम् एव। किन्तु तौ न अनुभवशालिनौ। अतः कीर्तिसेनः चिन्तयन् अस्ति– युद्धार्थम् अनुभवरहितयोः पुत्रयोः प्रेषणं किम् उचितं स्यात्? इति।

राजकुमारौ उभौ अपि ज्ञातवन्तौ यत् सहस्राक्षः आक्रमणार्थम् आगच्छन् अस्ति इति। अतः तौ पितुः समीपं गत्वा

अनुगृहीतवान्– "विजयी भवतु" इति।

राजा कीर्तिसेनः पण्डितम् एकवारं प्रशंसायुक्तया दृष्ट्या दृष्ट्वा उक्तवान् "पण्डितवर्य! महाबलशाली शत्रुः सम्मुखीकरणीयः अस्ति। एतादृशे सन्दर्भे भवतः एषः आशीर्वादः अस्मासु धैर्यम् उत्पादयति" इति।



एतत् श्रुतवतः पण्डितस्य मुखं गम्भीरं जातम्। सः राजानम् उक्तवान्– "महाराज! अहं शक्तिमयीनामिकां काञ्चित् विद्यां जानामि। तस्याः बलेन एकस्मिन् पुरुषे स्थितां शक्तिम् अन्यस्मिन् सङ्क्रामयितुं शक्नुमः। एतेन सः अपरः अद्वितीयशक्तिशाली भविष्यति। किन्तु एवं कर्तुं प्रथमस्य अङ्गीकारः अत्यावश्यकः। एवम् एव दातृस्वीकर्त्रोः मध्ये दायादसम्बन्धः अपि अत्यावश्यकः। कार्यस्य समाप्तेः अनन्तरं शक्तिदाता स्वशक्तिं प्रतिस्वीकर्तुम् अर्हति। एतस्याः विद्यायाः आधारेण भवान् निश्चयेन युद्धे जयं प्राप्तुं शक्नोति" इति।

तदा राजा मन्त्रपालं पृष्टवान्– "एवं तर्हि इदानीं मया किं करणीयम् इति भवान् वदति?" इति।

मन्त्रपालः मन्दहासपूर्वकम् उक्तवान्– "सहस्राक्षः प्रबलः शत्रुः। उभौ अपि राजकुमारौ पृथक् पृथक् युद्धं कुरुतः चेत् प्रायः जयः न प्राप्येत। एकः एव उभयोः सामर्थ्यं प्राप्नोति चेत् जयः निश्चितः। एतेन देशस्यापि हितं सेत्स्यति। पुत्रस्य अन्यतरस्य कीर्तिः अपि सर्वत्र प्रसरिष्यति" इति।

राजा कीर्तिसेनः एतत् अङ्गीकुर्वन् उक्तवान्– "पण्डितवर्य, भवतः विचारः अपूर्वः अस्ति। भवता यथा उक्तं तथा करिष्यामि अहम्" इति।

किन्तु एतं प्रस्तावम् आदित्यः न अङ्गीकृतवान्। "पण्डितेन यथा उक्तं तथा करणं सर्वथा अनुचितम्। वीरः कश्चित् अन्याय्येन मार्गेण कापट्येन वा शत्रुं जेतुं कदापि प्रयत्नं न करोति। विजयस्य बलं स्वीकृत्य युद्धकरणेन यः जयः प्राप्येत सः निष्कलङ्कः न। तादृशे जये मम आशा नास्ति। या कीर्तिः प्राप्येत तया अहं सन्तुष्टः न



विजयः अङ्गीकारपूर्वकं शिरः चालितवान्। तदा आदित्यः उक्तवान्– "वीराः धीराः युद्धार्थं गमनार्थं कदापि असम्मतिं न प्रकटयन्ति। किन्तु ते कदापि आत्मानं शक्तिहीनं द्रष्टुं न इच्छन्ति। अतः युद्धे जयस्य प्राप्त्यर्थं कोऽपि अन्यः उत्तमः उपायः चिन्तनीयः अस्माभिः" इति।

अत्रान्तरे वार्तालापस्य मध्ये प्रविशन् मन्त्रपालः उक्तवान्– "राजकुमार! तर्कवितर्कार्थम् एषः समयः न। भवद्भ्याम् अन्यतरेण स्वशक्तिः पित्रे दत्ता चेदपि कार्यं सेत्स्यति। तां शक्तिं स्वीकृत्य सः रणरङ्गे युद्धं करिष्यति" इति।

भविष्यामि। अतः अहं तु विजयस्य बलं स्वीकृत्य युद्धं कर्तुं न इच्छामि" इति उद्वेगयुक्तेन स्वरेण उक्तवान् आदित्यः।

तदा विजयः शान्तेन स्वरेण उक्तवान्– "आदित्य, आपत्काले कश्चित् उपायेन कार्यं साधयति चेत् सा वञ्चना इति न कथ्यते। वयम् अपि उपायेन कार्यसाधनं चिन्तयन्तः स्मः। एतत् अन्याय्यं न, अपि तु राजनीतिः। राज्यरक्षणभारः अस्माकम् उपरि अस्ति। उत्तरदायित्वस्य निर्वहणार्थं यत् क्रियते तत् राजधर्मः इति उच्यते" इति।

तदा राजा कीर्तिसेनः ज्येष्ठं पुत्रं पृष्टवान्– "विजय! भवतः अनुजः शक्तिदानार्थं सिद्धः चेत् भवान् रणरङ्गे युद्धं कर्तुं सिद्धः वा?" इति।

विजयः एतस्मिन् विषये अपि अङ्गीकारं प्रदर्शितवान्। किन्तु आदित्यः अत्रापि विरोधं प्रदर्शितवान्। किन्तु अन्ते बहुचिन्तनानन्तरं विजयाय स्वशक्तिं दातुम् अङ्गीकृतवान् सः। "शक्तिदानतः पूर्वम् अहं मन्त्रपालेन सह एकान्ते वार्तालापं कर्तुम् इच्छामि" इति उक्तवान् सः।

मन्त्रपालः आदित्यः च एकान्ते वार्तालापं कृत्वा प्रत्यागतवन्तौ। अनन्तरं मन्त्रपालः स्वमन्त्रसाहाय्येन आदित्यस्य शक्तिं विजये सङ्क्रामितवान्। विजयः सहस्राक्षं सम्मुखीकर्तुं रणरङ्गं गतवान्। युद्धे सहस्राक्षं पराजितं कृतवान्। रणरङ्गे विजयेन यत् शौर्यं प्रदर्शितं तत् सर्वैः प्रशंसितम् अभवत्।

विजयवधूं परिणीय रणरङ्गात् प्रत्यागतवान् विजयः। आदित्येन पूर्वं दत्ता शक्तिः आदित्याय प्रत्यर्पणीयं खलु? तदर्थं राजा मन्त्रपालम् आनेतुं दूतं प्रेषितवान्। किन्तु मन्त्रपालः न दृश्यते स्म। सः कुत्र गतः इति कोऽपि न जानाति स्म।

कीर्तिसेनः सुदीर्घं चिन्तनं कृत्वा निर्णीतवान् यत् आदित्यः एव सिंहासने उपवेशनीयः इति। एतां वार्तां श्रुत्वा विजयः पितरम् उक्तवान्– "तात! अहम् एकाकी गत्वा शत्रुं सम्मुखीकृतवान्। जयं प्राप्य प्रत्यागतवान् च। एवं स्थिते अपि भवान् आदित्यं सिंहासने उपवेशयन् अस्ति इति तु आश्चर्यस्य विषयः। आदित्यस्य सिंहासनस्वीकारम् अहं कदापि न अङ्गीकरोमि। इदानीम् आदित्यः शक्तिहीनः दुर्बलः च अस्ति इति अंशः भवता विस्मृतः अस्ति इति भाति। एवं स्थिते अपि भवान् आदित्यम् एव सिंहासने उपवेशयितुं प्रयत्नं करोति चेत् मम आदित्यस्य च मध्ये बाहुयुद्धं प्रचलेत्। तत्र यः जयं प्राप्नुयात् सः राजा भवेत्" इति।

आदित्य-विजययोः मध्ये खड्गयुद्धं प्रवृत्तम्। एतस्मिन् युद्धे आदित्यः दुर्बलः इव न दृष्टः। सः लीलया चातुर्येण च खड्गं चालयन् क्षणमात्रेण विजयस्य खड्गम् अधः पातितवान्। एवं विजयं पराजितं कृतवान् आदित्यः।



एतं परिणामं दृष्ट्वा विजयः नितरां लज्जितः आश्चर्यचकितः च। शक्तिहीनस्य आदित्यस्य एतादृशी शक्तिः कथम् आगता इत्येव न ज्ञातं विजयेन। सः अनिवार्यतया पराजयम् अङ्गीकृतवान्। आदित्यस्य सिंहासनस्वीकारं मौनम् अङ्गीकृतवान् चापि।

अल्पे एव काले आदित्यस्य पट्टाभिषेकः प्रवृत्तः। आदित्यः कमलपुरराज्यस्य राजा जातः।

एतदनन्तरं कदाचित् कनिष्ठा राज्ञी प्रभावती पतिं पृष्टवती– "आर्य, भवान् मम पुत्रस्य विजयस्य सिंहासनारोहणं निराकृत्य आदित्यं सिंहासने उपवेशितवान्। किन्तु एतेन मम कोऽपि असन्तोषः नास्ति। किन्तु

आदित्यः सिंहासने उपवेशितः यत् तस्य कारणज्ञाने कुतूहलिनी अहम्। अत्र ईर्ष्यायाः लेशः अपि नास्ति। केवलं कुतूहलेन पृच्छामि। शत्रुसम्मुखीकरणार्थं शक्तिः दातव्या इति प्रस्तावः यदा आगतः तदा आदित्यः निराकृतवान्। विजयः तु अङ्गीकारं प्रदर्शयन् आसीत्। मन्त्रपालः शक्तिमयीनामिकया विद्यया आदित्यस्य शक्तिं विजये सङ्क्रामितवान् आसीत्। तथापि कथं वा आदित्यः सामर्थ्यवान् एव स्थितः? सः कथं वा विजयं बाहुयुद्धे जेतुं शक्तवान्? एतेषां सर्वेषाम् उत्तरं ज्ञातुम् इच्छामि" इति।

तदा कीर्तिसेनः एकवारम् उच्चैः हसित्वा कनिष्ठराज्ञीं प्रभावतीम् उक्तवान्– "यः वीरः भवति सः सदापि स्वसामर्थ्यविषये एव विश्वसिति, न तु मन्त्रतन्त्रादिद्वारा प्राप्यमाणायां शक्त्याम्। यतः मन्त्रतन्त्रज्ञाः सर्वदा अपि अस्माकं साहाय्यार्थं मिलेयुः इत्यत्र विश्वासः नास्ति खलु? अतः आदित्यः उक्तवान् यत्र शत्रोः सम्मुखीकरणार्थं कोऽपि अन्यः उपायः आश्रयणीयः इति। किन्तु अन्ते सः स्वशक्तिं विजयाय दातुम् अङ्गीकृतवान्। एवम् अङ्गीकुर्वता तेन विवेकयुक्तः व्यवहारः प्रदर्शितः। शक्तिदानतः पूर्वं सः मन्त्रपालेन सह वार्तालापं कर्तुम् इष्टवान्। ...."

तदा मध्ये एव राजानं पृष्टवती प्रभावती– "आदित्यः एकान्ते मन्त्रपालेन सह कीदृशं वार्तालापं कृतवान् स्यात्?" इति।

"प्रायः पूर्वम् एव आदित्यस्य सन्देहः आसीत् यत् युद्धे जयस्य प्राप्तेः अनन्तरं विजयस्य चिन्तने परिवर्तनं भवेत् इति। अतः सः मन्त्रपालेन सह वार्तालापं कृत्वा युद्धानन्तरं स्वशक्तेः प्राप्त्यर्थम् आवश्यकं मन्त्रं पूर्वम् एव ज्ञातवान् स्यात्। एषः विषयः विजयेन ज्ञातः चेत् सः प्रतीकारबुद्ध्या मन्त्रपालं मारयितुम् उद्युक्तः भवेत् इति चिन्तयन् आदित्यः मन्त्रपालं कुत्रापि सुदूरं प्रेषितवान् स्यात्" इति उक्तवान् कीर्तिसेनः।

एतत् श्रुत्वा प्रभावती समाहिता सती मौनम् आश्रितवती।






# १

(सत्यसेनराजेन परिपाल्यमानायाः अमृतपुर्याः उपरि आक्रमणं कर्तुं रहस्यरूपेण सन्नाहं कृतवान् वीरसिंहः। किन्तु एतां वार्तां कथमपि जानन् सत्यसेनः मन्त्रिणं सूचितवान् यत् सन्धिः एव वरम् इति। किन्तु वीरसिंहस्य सेना यदा सुमतीनदीं क्रममाणा आसीत् तदा अकस्मात् राक्षसप्रवाहः आगतः। तेन वीरसिंहस्य सेना सर्वथा नष्टा अभवत्। तदनन्तरम्......।)

'विजयः निश्चितः' इति दृढः विश्वासः आसीत् वीरसिंहस्य। किन्तु तस्य योजना विपरीता जाता अस्ति। सेना तु सर्वथा नष्टा अस्ति। एतेन दिग्भ्रान्तः वीरसिंहः तीरे चिन्ताक्रान्तः सन् शिलामूर्तिः इव स्थितः अस्ति। सेनापतेः कपालकण्ठस्य अपि एतादृशी एव स्थितिः। दैवात् सः अपायात् रक्षितः। किन्तु तस्य मुखात् अपि किमपि वचनं न निस्सरति।

प्रवाहेण नीयमानाः अपि सजीवं तीरं प्राप्तवन्तः केचन वीरसिंहसैनिकाः प्रवाहेण नीयमानानि आयुधादीनि यथाशक्ति तीरम् आनेतुं प्रयतमानाः सन्ति। किन्तु आयुधसङ्ग्रहस्य अधिकः भागः प्रवाहेण नीतः एव।

अमृतपुरीसैनिकैः अपि प्रवाहेण नीयमानानि आयुधानि यथाशक्ति सङ्गृहीतानि। शत्रुसैनिकाः अपि केचन तैः



तीरम् आनीताः। एवं तीरम् आनीताः शत्रुसैनिकाः कारागारे स्थापिताः। एतदभ्यन्तरे सूर्योदयः जातः।

अनन्तरदिने राजा सत्यसेनः अधिकारिणः मेलयित्वा उक्तवान्– "शत्रुपक्षस्य आयुधानि यानि अस्माभिः प्राप्तानि तानि सदा उपयोगयोग्यानि यथा स्युः तथा कुर्वन्तु। अस्माकं सैन्यबलम् अल्पम्। शत्रुभीतिः अपि विरला एव आसीत्। अकस्मात् आक्रमणार्थम् आगतः शत्रुः दैवात् एव निवारितः। इतः परं तु चिन्ता नास्ति। अल्पेन एव प्रयत्नेन अस्माकम् आयुधसङ्ग्रहः पर्याप्तताम् आपन्नः। वीरसिंहः अग्रे कदाचित् सैन्यं सज्जीकृत्य आक्रमणं करिष्यति चेदपि अस्माकं काऽपि चिन्ता नास्ति। प्राणान् तृणीकृत्य युद्धं कर्तुं सिद्धानां सैनिकानां बलम् आयुधसङ्ग्रहः च यावत् भवति तावत् न काऽपि चिन्ता। कारागारे स्थापितान् शत्रुसैनिकान् बन्धविमुक्तान् कुर्वन्तु" इति।

तस्मिन् दिने रात्रौ मन्त्री, सेनापतिश्च दलपतिभ्यां सह गत्वा महाराजं मिलितवन्तौ। गुप्तरूपेण तेषां समालोचनं प्रवृत्तम्। तत्र सेनापतिः उक्तवान्– "प्रभो, प्रवाहतः रक्षित्वा कारागारे स्थापिताः शत्रुसैनिकाः बहवः बन्धविमुक्ताः कृताः चेदपि शान्तिपुरं गन्तुं न इच्छन्ति। प्रभोः अनुज्ञा यदि स्यात् तर्हि वयम् अमृतपुरीसैन्यं प्रवेष्टुम् इच्छामः इति वदन्ति ते" इति।

सत्यसेनराजः क्षणद्वयम् आलोच्य उक्तवान्– "शत्रुसैनिकेषु ये अस्मत्पक्षं प्रवेष्टुम् इच्छन्ति तान् सम्यक् परीक्ष्य अस्माकं सैन्ये योजयतु भवान्। तेन न काऽपि हानिः। एतेन अस्माकं सैन्यबलं वर्धते। सैन्यबलं वर्धयित्वा युद्धं करणीयम् इति मम आशयः न। पार्श्वे एव यावत् शत्रुः भवति तावत् अस्माभिः अपि सैन्यबलवर्धनविषये चिन्तनीयम् एव। वीरसिंहसेन पीड्यमानानां सुमेधराज्यप्रजानां योगक्षेमविषये अपि अस्माभिः चिन्तनीयम्। अतः सैन्यबलस्य वर्धनेन न किमपि अनौचित्यम्। इदानीम् अस्माकम् आद्यं कर्तव्यं नाम पुत्री, पौत्रः, जामाता इति एतेषां का गतिः जाता इति

सर्वप्रथमं ज्ञातव्यम्'' इति।

तदा मन्त्री निवेदितवान्– ''प्रभो! अन्या काचित् शुभवार्ता अस्ति। वीरसिंहः शान्तिदेवराजस्य मन्त्रिणः मारणार्थं प्रयत्नं कृतवान् आसीत् खलु? ततः सजीवं निर्गतः सः वृद्धः मन्त्री इदानीम् अस्माकं राज्ये अस्ति इति श्रूयते'' इति।

''एवं वा? वृद्धः मन्त्री विवेकसम्पन्नः गुणवान् च इति श्रुतम् आसीत्। किन्तु एवं वार्धके अपि शत्रून् सम्मुखीकर्तुं तस्य सामर्थ्यम् अस्ति इति तु अद्य ज्ञातम्'' इति उक्तवान् सत्यसेनः।



''वृद्धेन मन्त्रिणा बाहुबलं न प्रदर्शितम्। कश्चन अवगुण्ठनधारी पुरुषः अकस्मात् प्रत्यक्षीभूय वीरसिंहसैनिकान् यमपुरीं प्रेषयित्वा तं मन्त्रिणम् अस्माकं राज्यं प्रति प्रेषितवान्। सः मन्त्री अभिप्रैति यत् सः अवगुण्ठनधारी न अन्यः, अपि तु .....'' इति वदतः मन्त्रिणः वचनम् अर्धे एव स्थगयन् शयानः सत्यसेनराजः उत्साहेन शयनात् उत्थाय– ''शान्तिदेवः एव सः इति खलु? तं वृद्धं मन्त्रिणम् एतत्क्षणे एव अत्र आनाययतु। तेन सह वार्तालापः करणीयः अस्ति मया'' इति उक्तवान्।

''तथैव करिष्यामि महाराज! भवता अन्योऽपि विषयः ज्ञातव्यः अस्ति। वृद्धं मन्त्रिणं यः अवगुण्ठनधारी रक्षितवान् स एव वसन्तनामकं सुमेधराज्यस्य कञ्चन युवकम् अपि मरणदण्डनतः रक्षितवान्। महाराजे शान्तिदेवे तस्य वसन्तस्य विशेषभक्तिः। वीरसिंहस्य दुष्टतापूर्णः व्यवहारः समापनीयः एव इति सङ्कल्प्य सः वसन्तः विभिन्नैः वेषैः स्वदेशे सञ्चरन् युवकानां दलं रचयन् अस्ति। वीरसिंहः युद्धसन्नाहं कुर्वन् अस्ति इति वार्ता तेन एव आनीता आसीत्। तेन सह अस्माकं व्यवहारः कथं स्यात् इति तु न स्पष्टम्। श्रुत्वा महाराजः प्रमाणम्'' इति उक्तवान् मन्त्री।

राजा सत्यसेनः क्षणकालस्य मौनस्य अनन्तरम् उक्तवान्– ''वीरसिंहेन राजकुटुम्बस्य नाशार्थं प्रयत्नः कृतः इति ज्ञात्वा अपि अस्माभिः मौनं स्थितम् आसीत्।



अलिप्तनीत्या व्यवहरणीयम् इति हि अस्माकं धारणा। किन्तु दुष्टं वीरसिंहं विरुध्य ये कार्यं कुर्वन्ति तेषां साहाय्यम् अस्माकं कर्तव्यम्। वसन्तस्य तदनुचराणां च साहायय्म् अवश्यं करणीयम्। एषा धारणा तु स्पष्टा। इतः परं व्यवहारमार्गः कथं स्यात् इति चिन्तयिष्यति खलु भवान्?" इति।

"यथा भवतः आदेशः तथा करिष्यामि" इति उक्त्वा राजानं नमस्कृत्य सेनापतिना सह ततः निर्गतवान् मन्त्री।

* * * *

भारभूतमनस्कः सन् नदीतीरतः प्रत्यागतः वीरसिंहः सेनापतिं कपालकण्ठं स्वसमीपम् आनाय्य पृष्टवान्— "अये! महापूरस्य पूर्वसूचना भवता अपि कथं न प्राप्ता? साधकबाधकं सर्वं परिशील्य खलु प्रस्थानं करणीयम् आसीत्?" इति।

"श्रीमन्! सर्वं कृतम् एव। एतस्मिन् काले महापूरस्य प्रसक्तिः एव न भवति। अतः एषः अपायः केनापि न तर्कितः आसीत्। अन्यच्च आस्थानज्योतिषिकेण ग्रहगतिं परिशील्य निर्णीतम् आसीत् खलु – विजययात्रार्थम् एषः सुमुहूर्तः इति। इतरैः इव मया अपि विश्वासः कृतः। इदानीं मम सन्देहः तस्य ज्योतिषिकस्य व्यवहारविषये" इति उक्तवान् कपालकण्ठः।

"अयोग्यः ज्योतिषिकः सः। तम् एतत्क्षणे एव शूलम् आरोपयत्" इति आज्ञास्वरेण उक्तवान् वीरसिंहः।

"किं करोमि? सः ज्योतिषिकः कुत्र पलायितः इति न ज्ञायते। नदीतीरप्राप्तिपर्यन्तं सः अस्माभिः सहैव आसीत्। अनन्तरं सः केनापि न दृष्टः। सः प्रवाहेण नीतः स्यात्, उत अमृतपुरीं प्राप्तवान् इति तु केनापि न ज्ञायते" इति उक्तवान् कपालकण्ठः।

"हुँम्, अमृतपुरी! सा इदानीम् अस्माकं दृष्ट्या यमपुरी जाता!" इति कोपेन उक्तवान् वीरसिंहः।

"प्रभो! चिन्ता करणीया नास्ति। अमृतपुरी कदाचित् वा अस्माकम् अधीना भवेत् एव। अस्माभिः पुनरपि सैन्यं सङ्गृह्य अमृतपुरी स्वायत्तीकरणीया। सैन्यबलस्य

वर्धने इदानीम् अस्माकम् अवधानं स्यात्'' इति उक्तवान् कपालकण्ठः।

''किन्तु तत् कथम्? आयुधसङ्ग्रहार्थं कः मार्गः?'' इति पृष्टवान् वीरसिंहः।

''यदि अस्माकं समीपे धनं स्यात् तर्हि आयुधसङ्ग्रहः सुलभः। अन्यदेशात् क्रेतुम् अपि शक्यते। धनम् अस्ति चेत् सैनिकाः अपि प्राप्यन्ते'' इति उक्तवान् कपालकण्ठः।

''धनं वा? कुत्र अस्ति अस्माकं समीपे? शान्तिदेवस्य शासनकाले कूपखनन-मार्गनिर्माणादीनां निमित्तं समग्रा सम्पत्तिः व्ययिता। धनागारम् इदानीं रिक्तम्। एवं स्थिते वयं कुतः धनम् आनयेम?'' इति कोपमिश्रितेन स्वरेण उक्तवान् वीरसिंहः।

''प्रभो! सर्वस्य अपि मार्गः कश्चन भवति एव। अस्मिन् वर्षे अस्माकं राज्ये सुभिक्षम् अस्ति। चन्द्रपुर्यां धान्यस्य अभावः अस्ति। अतः पञ्चगुणितेन मूल्येन चन्द्रपुर्यां धान्यं विक्रेतुं शक्यम्। चन्द्रपुर्याम् उत्तमानि आयुधानि लभ्यन्ते। अतः तत्र धान्यं विक्रीय ततः आयुधानि क्रेतव्यानि'' इति सूचितवान् कपालकण्ठः।

''अपूर्वा सूचना एषा। साधु, कपालकण्ठ साधु! समग्रे देशे अद्यैव वार्तां सडिण्डिमघोषं प्रसारयतु यत् सामान्यैः कृषिकैः अर्धभागः, धनिकैः कृषिकैः पादोनभागश्च विशेषकररूपेण दातव्यः इति राजाज्ञा अस्ति इति'' इति उक्तवान् वीरसिंहः।



''यथाज्ञापयति महाप्रभो! धनिकेभ्यः कृषिकेभ्यः प्रथमं विशेषकरः सङ्ग्रहणीयः। अतः कृषिकराजस्य रघुनाथस्य गृहं प्रति अद्यैव भटान् प्रेषयिष्यामि'' इति उक्त्वा ततः निर्गतवान् कपालकण्ठः।

रघुनाथः धर्मभीरुः भूस्वामी। तस्य आधीन्ये बहवः कृषिकाः आसन्। आवश्यकतायां सत्यां ते रघुनाथतः धान्यानि नयन्ति। अनन्तरम् आनुकूल्ये सति, धनेन, धान्येन, इतरैः वस्तुभिः वा ऋणं प्रत्यर्पयिष्यन्ति। नास्ति इति वचनं कदापि रघुनाथस्य मुखात् न आगच्छति। अतः सर्वे कृषिकाः तं पितरम् इव गौरवेण प्रीत्या च पश्यन्ति स्म।

मध्याह्नसमये राजभटाः रघुनाथस्य गृहम्



आगतवन्तः। शताधिकाः कृषिकाः गोणीं कण्डोलं वा गृहीत्वा तस्य गृहस्य पुरतः स्थितवन्तः आसन्। भूस्वामिसेवकाः धान्यागारतः धान्यगोणीः आनीय वितरणार्थं सन्नाहं कुर्वन्तः आसन्।

विंशत्या भटैः सह आगतः आसीत् कश्चन अधिकारी। पञ्चाशत् शकटाः तेषां पृष्ठतः आसन्।

सः युवकः अधिकारी अश्वात् अवतीर्य दर्पेण रघुनाथसमीपम् आगत्य अधिकारवाण्या उक्तवान्– "भवता सङ्गृहीतस्य धान्यस्य पादोनभागः महाराजाय विशेषकररूपेण अर्पणीयः" इति।

रघुनाथः द्वित्राणि पदानि अग्रे स्थापयित्वा आश्चर्येण पृष्टवान्– "किमिति?" इति।

"उक्तं न श्रुतं वा भवता? पादोनभागः महाराजाय कररूपेण दातव्यः भवता" इति उक्तवान् अधिकारी।

"वार्षिकः करः मया दत्तः एव" इति उक्तवान् रघुनाथः।

"एषः विशेषकरः। विशेषकररूपेण सङ्गृहीतं धान्यं चन्द्रपुरीं प्रति नीयते। एषा राजाज्ञा" इति उक्तवान् अधिकारी।

"एतानि धान्यानि नीतानि चेत् एतेषां कृषिकाणां का गतिः?" इति पृष्टवान् रघुनाथः।

"स्वस्य का गतिः इति तैः स्वयं चिन्तनीयम्। तादृशं दायित्वम् अस्माकं न" इति दर्पेण उक्तवान् अधिकारी।

अधिकारिणम् अनुसृत्य आगताः राजभटाः हस्तस्थितां कशां चालयन्तः शकटचालकान् दर्पेण उक्तवन्तः– "एताः धान्यगोणीः शकटे स्थापयन्तु" इति।

"अस्मान् निर्गतिकान् मा कुर्वन्तु भोः" इति सकरुणं प्रार्थितवन्तः कृषिकाः। किन्तु किं प्रयोजनं तेन? राजभटानां कशया ताडिताः ते स्वयं धान्यगोणीः शकटेषु स्थापितवन्तः। धान्यागारस्थं धान्यम् अपि गोणीषु पूरितम्। ताः अपि गोण्यः कृषिकैः एव शकटे स्थापिताः। सायङ्कालपर्यन्तम् एतत् कार्यं प्रवृत्तम्।

शकटाः पश्चिमदिशि प्रस्थिताः।

ग्रामीणाः शिरः अवनमय्य शकटान् अनुसृतवन्तः। एतत् दृष्ट्वा अधिकारी विजयगर्वेण हसितवान्। पुनः किञ्चित्कालानन्तरम् अधिकारिणः मनसि कश्चन सन्देहः आगतः– "एते ग्रामीणाः किमर्थं वा एवं शकटान् अनुरसन्तः सन्ति? एतेषु युवकाः एव अधिकतया दृश्यन्ते। किमपि कुतन्त्रं स्यात् वा?" इति।

सः गमनं स्थगयित्वा अश्वं परिवर्त्य खड्गं चालयन् उच्चस्वरेण ग्रामीणान् उक्तवान्– "इतः परम् अपि किं कार्यं भवताम्? धान्यस्य आशां परित्यज्य प्रतिगच्छन्तु तावत्" इति।

तावता शकटाः पर्वतसमीपम् आगताः आसन्। ग्रामस्थानां गणे स्थितः कश्चित् उच्चैः शब्दं कृतवान्– "अहो ...." इति। तावता अश्वस्य उपरि स्थितस्य अधिकारिणः कण्ठे दूरात् क्षिप्तः पाशः लग्नः। पाशेन बद्धः सः अधः पतितवान्। अत्रान्तरे केचन युवकाः पर्वततः वेगेन अधः आगत्य अधिकारिणं राजभटान् च बद्धवन्तः। "भीतिः मास्तु। प्राणापायः तु नास्ति भवताम्" इति उक्तवन्तः च।

तेषां युवकानां नायकः ग्रामीणान् उक्तवान्– "एतत् धान्यं ग्रामं प्रति नयन्तु भवन्तः। यथायोग्यं विभज्य स्वीकुर्वन्तु। काऽपि भीतिः मास्तु भवताम्" इति।

ग्रामीणाः धान्यगोणीभिः सह यदा प्रतिगतवन्तः तदा सः युवकनायकः तान् राजभटान् अधिकारिणं च वृक्षेषु बद्ध्वा– "भवतां बन्धनं भवन्नायकं निवेद्य विमोचनार्थं व्यवस्थां करिष्यामि अहम्। यावत् वयं जीवामः तावत् अस्माकं देशतः एकः धान्यकणः अपि प्रतिवेशिदेशं प्रति न गच्छेत् इति एतं विषयं भवतां नायकं कपालकण्ठं सम्यक् निवेदयन्तु" इति उक्त्वा ततः निर्गतवान्।

एतत्सर्वं कृतवान् साहसी युवकः कः इति ज्ञातं स्यात् खलु भवद्भिः? सः अस्ति वसन्तः। –(अनुवर्तते)






# कलासाफल्यम्

दृढव्रती त्रिविक्रमः पुनरपि वृक्षस्य समीपं गतवान्। वृक्षम् आरुह्य शवं स्कन्धे आरोप्य अधः आगतवान्। अनन्तरं यथापूर्वं मौनं श्मशानाभिमुखं प्रस्थितवान् च। तदा शवान्तर्गतः वेतालः अवदत्– "अये राजन्! केन उद्देशेन भवान् मध्यरात्रे एवं कष्टम् अनुभवन् अस्ति इति अहं तु न जानामि। केचन जनाः विशिष्टं किमपि लक्ष्यं मनसि स्थापयित्वा कार्यप्रवृत्ताः भवन्ति, किन्तु लक्ष्यसिद्धिसमये च उदासीनाः भवन्ति। फलप्राप्तितः वञ्चिताः भवन्ति च। पूर्वं वामनपुरे रामाचार्यः नाम कलाकारः आसीत्। तेन एवम् एव कृतम्। तस्य कथां विस्तरेण श्रावयामि। श्रद्धया शृणोतु तावत्। तेन भवतः मार्गायासः परिहृतः भवेत्" इति।

अनन्तरं वेतालेन कथा आरब्धा–

वामनपुरं कश्चन अल्पः ग्रामः। तत्र रामाचार्यः नाम कलाकारः निवसति स्म। सः

## वेतालकथा

निर्धनः। कदाचित् कश्चित् तं निवेदितवान् यत् राज्ञः समीपं गत्वा कलापाण्डित्यं प्रदर्शितं चेत् दारिद्र्यम् अपगच्छेत् इति। एतदनुसारं रामाचार्यः राजधानीं गतवान्। राजदर्शनप्राप्त्यर्थं सः बहुधा प्रयत्नं कृतवान्। बहूनि दिनानि प्रतीक्षितवान् चापि। तथापि राजदर्शनं तु न लब्धम्। अन्ते निराशः सः स्वग्रामं प्रत्यागतवान्।

रामाचार्यस्य कलानैपुण्यम् अद्वितीयम् आसीत्। किन्तु अल्पे तस्मिन् ग्रामे तस्य कलायाः प्रशंसकः प्रोत्साहकः वा कोऽपि न आसीत्। अतः रामाचार्येण निर्मिताः मूर्तयः क्रीताः न भवन्ति स्म। एवं श्रेष्ठः कलाकारः सन् अपि रामाचार्यः दारिद्र्येण पीड्यमानः सन् महता कष्टेन जीवनं यापयति स्म।

एषु एव दिनेषु कश्चन ग्रामप्रमुखः रामाचार्यस्य कलानैपुण्यं श्रुत्वा तं स्वसमीपम् आनायितवान्। सः रामाचार्यम् उक्तवान्– "पश्यतु रामाचार्य, भवान् उत्तमः कलाकारः इति, मया श्रुतम्। अहं भवतः सांहाय्यं कर्तुम् इच्छामि। प्रतिमासम् अहं भवते पञ्चाशत् रूप्यकाणि दास्यामि। भवता मह्यम् उत्तमाः मूर्तयः निर्माय दातव्याः" इति।

रामाचार्यः एतं प्रस्तावं महता सन्तोषेण अङ्गीकृतवान्। रामाचार्यः कार्ये न अलसः। वञ्चनादिकं नाम्ना अपि न जानाति। अतः अहोरात्रं मूर्तिनिर्माणकार्ये मग्नः भवति सः। अपूर्वाः मूर्तीः निर्माति च। एषः ग्रामप्रमुखः समीपस्थेषु ग्रामेषु धनिकेभ्यः ताः मूर्तीः विक्रीय प्रभूतं धनं सम्पादयति। रामाचार्यस्य



कलानैपुण्यं तेषु ग्रामेषु प्रसिद्धं जातम्।

कदाचित् कश्चित् भूस्वामी रामाचार्यस्य कलानैपुण्यविषये श्रुतवान्। सः रामाचार्यं स्वसमीपम् आनाय्य उक्तवान्– "अहं भवते प्रतिमासं शतं रूप्यकाणि दास्यामि। भवान् मह्यं मूर्तीः निर्माय ददातु" इति।

रामाचार्यः एतत् श्रुत्वा हसितवान्। स्वस्य अङ्गीकारं प्रदर्शितवान् च। एतदनन्तरं रामाचार्यः भूस्वामिनः निमित्तं मूर्तीः निर्मातुम् आरब्धवान्।

रामाचार्येण निर्मिताः मूर्तीः भूस्वामी उत्तमेन मूल्येन विक्रीतवान्। मूर्तीनां विक्रयणतः सः प्रभूतं धनं सम्पादितवान्।

एवं स्थिते कदाचित् तस्य प्रदेशस्य सामन्तराजः रामाचार्यस्य विषयं श्रुतवान्। सः कदाचित् रामाचार्यं स्वसमीपम् आनाय्य उक्तवान्– "रामाचार्य! भवतः कीर्तिः मया श्रुता अस्ति। अहं भवते प्रतिमासं सहस्रं रूप्यकाणि वेतनं दास्यामि। भवान् मह्यं मूर्तीः निर्माय ददातु" इति।

एतत् श्रुत्वा रामाचार्यः यथापूर्वं हसितवान्, स्वस्य अङ्गीकारं प्रदर्शितवान् च। सामन्तराजः स्वमित्रेभ्यः अन्येभ्यः सामन्तराजेभ्यः च रामाचार्येण निर्मिताः मूर्तीः उपायनरूपेण ददाति। तासां मूर्तीनां प्राप्त्या ते सन्तुष्टाः भवन्ति। एवं सामन्तराजः प्रत्यक्षतः न, अपि तु परोक्षेण अधिकं लाभं प्राप्नोति स्म।

कदाचित् एषः सामन्तराजः रामाचार्येण निर्मिताम् एकाम् अपूर्वां मूर्तिं महाराजाय






उपायनरूपेण प्रेषितवान्। मूर्तेः रचनाकौशलं सौन्दर्यं च दृष्ट्वा राजा व्यामुग्धः। मूर्तिकारस्य विषये महाराजस्य आदरः उत्पन्नः। सः तत्क्षणे एव भटान् रामाचार्यम् आनेतुं प्रेषितवान्।

तस्मिन् एव दिने आनन्दः नाम कश्चन निर्धनः युवकः रामाचार्यस्य समीपम् आगतवान्। रामाचार्यं श्रद्धया नमस्कृत्य उक्तवान् सः– "श्रीमन्! अहं मूर्तिनिर्माणविषये किञ्चित् जानामि। गुरोः मार्गदर्शनं विना या काऽपि विद्या परिष्कृता न भवति। अतः अहं भवतः समीपम् आगतवान्। मूर्तिनिर्माणक्षेत्रे अपूर्वं प्रावीण्यं सम्पादनीयम् इति मम इच्छा। अतः अहं विनयेन प्रार्थयामि यत् शिष्यत्वेन स्वीकृत्य मामू अनुगृह्णातु इति" इति।

तदा रामाचार्यः उक्तवान्– "अहम् इदानीं महाराजस्य समीपं गच्छन् अस्मि। ततः प्रत्यागत्य एतद्विषये वार्तालापं करिष्यामि" इति। अनन्तरं रामाचार्यः राजास्थानं प्राप्तवान्। रामाचार्यम् उक्तवान् महाराजः– "रामाचार्यवर्य! भवान् अद्वितीयः कलाकारः अस्ति। अहं भवन्तम् आस्थानकलाकारं कर्तुम् इच्छामि" इति।

तदा रामाचार्यः उक्तवान्– "प्रभो! मम विषये भवता यः आदरः प्रकटितः तदर्थम् अहं कृतज्ञः अस्मि। किन्तु क्षन्तव्यः अहम्। अहं मम शिष्टं जीवनं स्वग्रामे एव यापयितुम् इच्छामि" इति।

रामाचार्यस्य वचनं श्रुत्वा राजा मन्दहासपूर्वकम् उक्तवान्– "महाशिल्पिन्! यथा इच्छा तथा करोतु भवान्। मया दीयमानम् उपायनं स्वीकृत्य मां कृतार्थं च करोतु" इति। अनन्तरं महाराजः विपुलेन धनेन रामाचार्यं सत्कृत्य गौरवेण तं प्रेषितवान्।

वेतालः एवं कथां समाप्य अवदत्– "अये राजन्! रामाचार्येण किं कृतम्? नूतनः आश्रयदाता यदा लब्धः तदा पूर्वतनः परित्यक्तः। एवं तर्हि रामाचार्यः किम् अत्याशाग्रस्तः? पूर्वं सः राजदर्शनं प्राप्तुं प्रयत्नं कृतवान्। महान्तं प्रयत्नं कृत्वा अपि असाफल्यं प्राप्य निराशया प्रत्यागतवान्।

किन्तु एषः एव रामाचार्यः, यदा आस्थानकलाकारत्वं प्राप्तं तदा निराकरणं प्रदर्शितवान्। किमर्थं तथा कृतवान् सः? पूर्वं राजदर्शनार्थं यदा गतं तदा यत् अपमाननम् अनुभूतं तेन खिन्नः सः तथा कृतवान् वा? अथवा आस्थानकलाकारपदव्याः महत्त्वम् एव ज्ञातुं न शक्तवान् वा सः? एतेषां प्रश्नानां योग्यम् उत्तरं जानन् अपि यदि भवान् न वदेत् तर्हि भवतः शिरः सहस्रधा भग्नं भवेत्'' इति।

तदा मौनं स्थातुम् अशक्तः त्रिविक्रमः एवम् उक्तवान्– ''रामाचार्यः अत्याशाग्रस्तः अविवेकी वा न। महती कीर्तिः प्राप्तव्या इत्यपि आशा नास्ति तस्य। तादृशः सरलः सः। एवं तर्हि सः किमर्थं वा पूर्वतनम् आश्रयदातारं परित्यज्य नूतनस्य समीपं गतवान् इति प्रश्नः उद्भवेत्। एतस्य उत्तरं सरलम्। 'कोऽपि मम कलानैपुण्यं ज्ञात्वा सन्तोषं प्रकटयेत्' इति इच्छा आसीत् रामाचार्यस्य। ग्रामप्रमुखः, भूस्वामी, सामन्तराजः वा तस्य कलायाः आधारेण स्वलाभं केवलं चिन्तितवन्तः। सन्तोषसूचकम् एकं वचनम् अपि न उक्तवन्तः। महाराजः तस्य कलानैपुण्यं श्रुत्वा सन्तोषं प्रकटयन् सत्कर्तुं सिद्धः आसीत् इति तु सत्यम् एव। किन्तु एतावता सर्वत्र अटनात् स्वानुभवबलात् च रामाचार्यः ज्ञातवान् आसीत् यत् जीवनस्य सार्थक्यं कुत्र अस्ति इति। स्वसदृशानाम् अन्येषां कलाकाराणां निर्मित्या एव जीवनस्य सार्थक्यम् इत्येषः अंशः तेन अवगतः आसीत्। अतः सः आस्थानकलाकारपदवीं हस्तप्राप्ताम् अपि परित्यक्तवान्। कलाविद्यालयस्य आरम्भार्थं सङ्कल्पं कृतवान् चापि। महाराजेन उपायनरूपेण दत्तं धनम् अत्र उपकारकं सञ्जातम्'' इति।

एवं वदता त्रिविक्रमेण मौनभङ्गः कृतः आसीत्। अतः शवान्तर्गतः वेतालः ततः अदृश्यः भूत्वा यथापूर्वं वृक्षस्य शाखाम् अवलम्बितवान्।





# गणनाचातुर्यम्

रजतपुरे पूर्वं कनकदासः नाम कश्चन कुसीदवणिक् आसीत्। नरसिंहः नाम कश्चन युवकः तस्य कार्यालये लिपिकारः सन् समग्रं गणनाव्यवहारं निर्वहति स्म। नरसिंहे कनकदासस्य पूर्णः विश्वासः आसीत्।

सौभाग्यवशात् नरसिंहेन भूस्वामिनः कार्यालये उत्तमवेतनोपेतः उद्योगः प्राप्तः। अतः सः कनकदासस्य उद्योगं परित्यज्य भूस्वामिनः उद्योगम् आश्रितवान्। उत्तमः उद्योगी नरसिंहः गतः इत्यतः कनकदासस्य कष्टम् आरब्धम्। यतः तादृशस्य प्राप्तिः न सुलभा खलु?

बहूनां दिनानां प्रयत्नस्य अनन्तरम् अपि कनकदासेन उत्तमः लिपिकारः न प्राप्तः। इदानीं तेन एकत्र कुसीदवाणिज्यं करणीयम्, अपरत्र गणना अपि लेखनीया। अतः बहुधा कष्टम् अनुभवति सः।

स्वस्य कष्टं नरसिंहं निवेदितवान् कनकदासः। "अहं मम परिचितौ समर्थौ द्वौ प्रेषयिष्यामि। परीक्ष्य तयोः अन्यतरं स्वीकरोतु भवान्" इति सूचितवान् नरसिंहः। तदनुगुणं रामचन्द्र-गोविन्दनामकौ युवकौ कनकदासस्य समीपं प्रेषितवान्।

तौ उक्तवान् भूस्वामी– "भवतोः हस्ते मया लिखितं गणनापुस्तकम् एकैकं स्थापयामि। तत् गणनापुस्तकं जागरूकतया दृष्ट्वा कोऽपि दोषः दृष्टः चेत् अहं सूचनीयः" इति।

रामचन्द्रः गोविन्दः च एतत् अङ्गीकृत्य कनकदासेन दत्तं गणनापुस्तकं स्वीकृत्य गृहं गतवन्तौ।

अनन्तरदिने सायङ्काले तौ प्रत्यागत्य कनकदासाय गणनापुस्तकं प्रत्यर्पितवन्तौ।

कनकदासः मन्दहासपूर्वकं रामचन्द्रं

पृष्टवान्– "मया लिखितायां गणनायां कोऽपि दोषः दृष्टः वा भवता?" इति।

तदा रामचन्द्रः उक्तवान्– "सामान्यतः गणना सम्यक् एव अस्ति। वृद्धिस्वीकारविषये भवता चतुर्षु स्थलेषु न्यूनं स्वीकृतम्। पञ्चसु स्थलेषु अधिकं विहितम्" इति।

कनकदासः प्रतिक्रियारूपेण मन्दहासं प्रदर्श्य गोविन्दं पृष्टवान्– "मित्रवर्य! मया दत्ते पुस्तके कोऽपि दोषः लक्षितः व भवता?" इति।

"सर्वत्र सम्यक् एव अस्ति। केवलं त्रिषु सन्दर्भेषु दोषः कृतः दृष्टः मया" इति विनयेन उक्तवान् गोविन्दः।

"त्रिषु स्थलेषु दोषः इति? कीदृशः दोषः सः?" इति पृष्टवान् कनकदासः।

"त्वरावशात् दोषः जातः स्यात्। वृद्धिसङ्ग्रहसन्दर्भे त्रिषु स्थलेषु न्यूना वृद्धिः स्वीकृता" इति उक्तवान् गोविन्दः।

तदा कनकदासः मन्दहासपूर्वकं रामचन्द्रम् उक्तवान्– "भोः, माम् अन्यथा मा चिन्तयतु। भवान् अन्यत्र उद्योगार्थं प्रयत्नं करोतु। अन्यत्र कुत्रापि उद्योगः न लब्धः चेत् पुनः मां पश्यतु। अहं नरसिंहं सर्वं निवेदयिष्यामि" इति।

रामचन्द्रस्य निर्गमनस्य अनन्तरं कनकदासः गोविन्दं पृष्टवान्– "भवता यत् उक्तं तत् सत्यम्। त्रिषु सन्दर्भेषु मया वृद्धिस्वीकारविषये दोषः कृतः। तथैव चतुर्षु स्थलेषु वृद्धिविधानविषये अपि आधिक्यं कृतं



खलु? एषः अंशः न लक्षितः वा भवता?" इति।

"श्रीमन्! एषः अंशः मया लक्षितः एव। ये अस्मत्तः ऋणं स्वीकुर्वन्ति ते प्रत्यर्पणसन्दर्भे वृद्धिं सम्यक् गणयित्वा एव अत्र आगच्छन्ति। दोषः दृष्टः चेत् अस्मान् सूचयिष्यन्ति च। 'भवता पृष्टं चेत् वदेयम्' इति चिन्तयित्वा आरम्भे न उक्तवान्, तावदेव" इति उक्तवान् गोविन्दः।

"ते ऋणस्वीकर्तारः गणनायां जातं दोषं न ज्ञातवन्तः चेत् ...?" इति पृष्टवान् कनकदासः।

तदा गोविन्दः हसन् उक्तवान्– "ऋणस्वीकर्तारः प्रत्यर्पणसमये कदाऽपि अजागरूकाः न भवन्ति। स्वीकरणसमये कश्चित् जागरूकतां न प्रदर्शयेत् नाम, किन्तु दानसमये सर्वेऽपि नितरां जागरूकाः भवन्ति एव। अथवा, गणनाम् ते न जानन्ति इत्येव भावयेम। तदा गणनादोषकारणतः यावत् अधिकं विहितम् आसीत् तावत् प्रत्यर्पितं चेत् अस्माकं विश्वासार्हता वर्धते। एतत् अस्माकं व्यवहारस्य पोषकम् एव खलु? अतः अहं वृद्धिविधाने आधिक्यं जानन् अपि न प्रदर्शितवान्" इति।

"एवं तर्हि न्यूना वृद्धिः स्वीकृता इति किमर्थं प्रदर्शितवान्?" इति पृष्टवान् कनकदासः।

"दिनानि गतानि चेत् तावत् धनं प्रतिप्राप्तुं न शक्येत एव। अतः एव प्रथमं तम् अंशं भवते प्रदर्शितवान्" इति उक्तवान् गोविन्दः।

एतत् उत्तरं श्रुत्वा सन्तुष्टः कनकदासः– "साधु गोविन्द! भवतः व्यवहारेण अहं सन्तुष्टः अस्मि। भवान् गणनाचातुर्येण नरसिंहतुल्यः एव अस्ति। श्वः आरभ्य भवान् अत्र कार्यार्थम् आगच्छतु" इति उक्तवान्।

अनन्तरं कनकदासः नरसिंहं गोविन्दस्य गणनाचातुर्यं निवेद्य– "गोविन्दं मत्समीपं प्रेषयन् भवान् माम् उपकृतवान्" इति कृतज्ञतापूर्वकम् उक्तवान्।



चन्दमामानुबन्धः-१९

# ज्ञानभाण्डागारम्

## सः कः स्यात्?

नर्मदानद्याः मूले कश्चन मुनिः आसीत्। बहोः कालतः तस्य अपत्यं न आसीत्। अतः सः आराधनेन शिवं सन्तोष्य– 'सन्तानदानेन अहम् अनुग्रहणीयः' इति प्रार्थितवान्। तदा शिवः– "भवान् सामान्यबुद्धिमत्तया युक्तं दीर्घायुष्कं पुत्रम् इच्छति, उत विद्याविवेकसम्पन्नं द्वादशवर्षायुष्कं पुत्रम्?" इति पृष्टवान्। 'अल्पायुष्कः चेदपि विद्याविवेकसम्पन्नः एव मम भवतु' इति उक्तवान् मुनिः।

अनन्तरकाले मुनिना पुत्रः प्राप्तः। सः सकलाः विद्याः अभ्यस्यन् प्रवृद्धः। मुनेः चिन्ता अपि प्रवृद्धा। कदाचित् मुनिः पुत्रं शिवेन दत्तस्य वरस्य विषयं निवेदितवान्। मुनिकुमारः विविक्तं स्थलं गत्वा शिवं ध्यायन् तपसि लीनः जातः। तावता तस्य आयुः समाप्तम् आसीत्। अतः तं नेतुं यमदूताः आगताः। किन्तु शिवे लीनतां प्राप्तवन्तम् इव स्थितं मुनिकुमारं ग्रहीतुम् अशक्ताः ते प्रतिगतवन्तः। अनन्तरं सः मुनिकुमारः चिरञ्जीवित्वं प्राप्य लोकविख्यातः जातः।

वदन्तु, सः मुनिकुमारः कः?

(उत्तरं ३६तमे पृष्ठे)

## भवन्तः जानन्ति वा?

१. अण्टार्क्टिक्स्थं हिमं द्रवीभूतं चेत् किं भवेत्?
२. सः सुविशालः ग्रहः कः, यश्च सौरमण्डलस्थान् सर्वान् ग्रहान् स्वस्य उदरे अन्तर्भावयितुम् अर्हति?
३. चीनादेशीयाः कृषिकाः अग्रिमं वायुमानं कीदृशं स्यात् इति ८०% निर्दुष्टं वदन्ति। एतत् कथम्?
४. लम्बकद्वारा घटीचालनं शक्यम् इति केन अन्विष्टम्?
५. इदानीम् अपि अग्नेः उपयोगम् अकुर्वन्तः जनाः भारते कुत्र सन्ति?

(उत्तराणि ३६तमे पृष्ठे)

# कुरुक्षेत्रम्

अतिसुदीर्घः इतिहासः अस्ति कुरुक्षेत्रस्य। प्राचीने ऋग्वेदे अपि एतस्य क्षेत्रस्य उल्लेखः कृतः दृश्यते। कुरुचक्रवर्ती एतस्मिन् प्रदेशे यज्ञं कृतवान् इत्यतः एतस्य प्रदेशस्य नाम कुरुक्षेत्रम् इति जातम्। कुरुवंशीयानां कौरवाणां पाण्डवानां च मध्ये महाभारतयुद्धम् अत्रैव प्रवृत्तम्। महाभारतयुद्धकाले श्रीकृष्णः एतस्मिन् एव पवित्रे क्षेत्रे अर्जुनं भगवद्गीताम् उपदिष्टवान्। कृष्णार्जुनयोः संवादः यत्र प्रवृत्तः स च प्रदेशः 'ज्योतिसर्' नाम्ना




कथ्यते इदानीम्। भगवद्गीतायाः आविर्भावार्थं कारणीभूतम् एतत् क्षेत्रं धर्मक्षेत्रम् अपि। भारतीये साहित्ये एतस्य विशिष्टं स्थानम् अस्ति।

बहवः महात्मानः एतस्मिन् प्रदेशे वासं

कृतवन्तः। व्यासः एतस्मिन् एव प्रदेशे उपविश्य पुराणानि रचितवान् इति प्रतीतिः अस्ति। सुप्रसिद्धः वैयाकरणः पाणिनिः अपि अत्रैव निवसति स्म इति श्रूयते।

इदानीं गुप्तगामिनी इति या कथ्यते सा सरस्वती पूर्वम् अत्रैव व्यक्तरूपेण प्रवहति स्म। अतः एषः प्रदेशः सम्पद्भरितः आसीत्। अतः एव बहवः एतस्य प्रदेशस्य उपरि आक्रमणम् अपि कृतवन्तः।

कुरुक्षेत्रं चन्दीगढतः ८८ कि.मी. दूरे अस्ति। अत्र 'ब्रह्मसरः' नाम सरोवरम् अस्ति। एतत् सरोवरं परितः ३६५ सुन्दराणि देवमन्दिराणि सन्ति। सूर्यग्रहणदिने लक्षाधिकाः भक्ताः एतस्मिन् सरोवरे स्नानं कृत्वा आत्मानं पवित्रीकुर्वन्ति।

हर्यानाराज्ये स्थितं कुरुक्षेत्रम् इदानीं विविधानां कार्यकलापानां केन्द्रम् अस्ति। कुरुक्षेत्रविश्वविद्यालयः, तत्सदृश्यः अन्याः संस्थाः च अत्र स्वकार्यजालं प्रसारितवत्यः दृश्यन्ते।

कुरुक्षेत्रं तादृशं विशिष्टं क्षेत्रं, यस्य च नाम्नः स्मरणात् जनानां हृदयेषु नूतना स्फूर्तिः उद्भवति।

## विकसन्ती अस्ति भूमिः

'षष्टिकोटिवर्षेभ्यः पूर्वं भूमेः परिमाणम् इदानीन्तनस्य परिमाणस्य अपेक्षया अर्धम् आसीत्। ध्रुवप्रदेशयोः द्वयोः मध्ये स्थितः अवकाशः क्रमशः वर्धमानः अस्ति' इति भारतीयः भूगर्भशास्त्रज्ञः प्रो. एफ्. अहम्मद् अभिप्रैति। एषः अभिप्रायः तेन एषु दिनेषु कोच्चिनगरे प्रवृत्ते भारतीयविज्ञानसमावेशे स्वसंशोधनोपन्यासे प्रकाशितः। सिद्धान्तरूपेण एतस्य अभिप्रायस्य निरूपणार्थं शास्त्रीयः आधारः तु प्रदर्शनीयः अस्ति।



## रसवार्ता:




### होम्स्‌निमित्तं स्मारकभवनम्

सुप्रसिद्धेन सर् अर्थर् कानन् डोयेल्वर्येण सृष्टस्य शेर्लाक् होम्वर्यस्य समयस्फूर्त्या वाक्चातुर्येण को वा न आकृष्टः? अर्थरवर्येण सूचिते बेकर्मार्गे (२२१, बि,) होम्स्‌निमित्तं स्मारकभवनं निर्मीयमाणम् अस्ति। एतस्मिन् भवने अर्थर्वर्यस्य जीवितसम्बन्धीनि वस्तूनि, कृतयश्च सार्वजनिकदर्शनार्थं स्थाप्यन्ते इति श्रूयते।

# सम्पादयेम वयं साहित्यज्ञानसम्पदम्

१. सर् अर्थर् काननु डोयल् कया वृत्त्या जीवति स्म?

२. कः ग्रन्थः चैतन्यमहाप्रभोः जीवनं विस्तरेण परिचाययति?

३. 'हेलेन् आफ् ट्राय्'– का सा?

४. जर्मन्भाषया रचितं महाकाव्यं किम्? तस्य कर्ता कः?

५. 'सागा' इति पदस्य वास्तविकः अर्थः कः?

# उत्तराणि

## सः कः स्यात्?

मृकण्डुमुनेः कुमारः मार्कण्डेयः।

## सामान्यज्ञानम्

१. समुद्रस्तरः २४० द्वादशाङ्गुलं प्रवर्धेत। भूमेः १/४ भगः जलेन आवृतः भवेत्।
२. गुरुग्रहः।
३. मण्डूकानां ध्वनेः श्रवणेन।
४. गेलिलियो।
५. अन्दमानद्वीपे।

## साहित्यज्ञानम्

१. वैद्यकीयवृत्त्या।

२. कृष्णदासकविराजेन विरचितः चैतन्य-चरितामृतनामकः ग्रन्थः।

३. होमर्कविना रचितस्य 'दि इलियड्' ग्रन्थस्य नायिका।

४. 'फास्ट्'नामकम्। गेथे।

५. ऐस्ल्याण्ड्-नार्वेप्रदेशीयाः सुदीर्घाः गाथाः इति।



# दिव्यपुरुषदर्शनम्

मलयवतीनगरे पूर्वं धनपालः नाम कश्चन महाधनिकः निवसति स्म। तस्य सम्पत्तिः अगणिता अस्ति, किन्तु अपत्यम् एव नास्ति! एतया एव चिन्तया तस्य पत्नी दिवं गता आसीत्। पत्न्याः मरणस्य अनन्तरं तु धनपालः सदापि चिन्तासागरे निमग्नः एव तिष्ठति।

एतेषु एव दिनेषु सदानन्दः नाम कश्चन महात्मा मलयवतीम् आगतवान्। त्रिकालज्ञानी इति तस्य कीर्तिः आसीत्। स्वसमस्यायाः परिहारार्थं जनाः बहवः तस्य महात्मनः समीपं गच्छन्ति स्म। धनपालः सदानन्दस्य वार्तां श्रुतवान्। कदाचित् तस्य समीपं गत्वा स्वगृहं प्रति निमन्त्रितवान् च।

गृहम् आगतं सदानन्दं स्वचिन्तां विस्तरेण निवेद्य पृष्टवान् धनपालः— "श्रीमन्! किं कृतं चेत् मया मनःशान्तिः प्राप्येत? केन उपायेन शिष्टम् आयुः निश्चिन्तं यापितं भवेत्?" इति।

तदा सदानन्दः सन्तानराहित्यमात्रेण एवं खेदः न उचितः इति वदन् जीवनोन्नत्यर्थं साहाय्यकान् बहून् विषयान् बोधितवान्।

तदा व्याकुलचित्तः धनपालः सदानन्दम् उक्तवान्— "श्रीमन्! धनं जनेषु कथं लोभं जनयति इति भवान् जानाति एव। बान्धवाः इदानीं मम मरणं गृध्राः इव प्रतीक्षमाणाः सन्ति। अहं मम सम्पत्तिं तेषाम् अधीनां कर्तुं न इच्छामि। सम्पत्तेः सद्विनियोगः कथं स्यात् इत्येव मम चिन्ता" इति।

तदा सदानन्दः मन्दहासपूर्वकम् उक्तवान्— "भोः, जीवनं सदापि मधुरम् एव। चिन्ताकारणतः भवान् तिक्तं फलं प्राप्नुवन् अस्ति। अतः अग्रिमं जीवनं भवान् निर्जने अरण्ये यापयतु। तदा शान्तिः प्राप्यते भवता। जीवनस्य अन्तिमे भागे कश्चन दिव्यपुरुषः भवत्समीपम् आगमिष्यति। तस्य

मुखे अपूर्वा कान्तिः दृश्यते। तस्य सहवासतः तृप्तिं प्राप्य भवान् इहलोकव्यापारं समापयिष्यति। स एव भवतः सम्पत्तेः उत्तराधिकारी भविष्यति। सत्पात्रे सम्पत्तेः निक्षेपात् भवान् अपि स्वर्गप्राप्तिफलं प्राप्स्यति" इति।

धनपालः कृतज्ञतापूर्वकं महात्मानं नमस्कृतवान्। गमनसमये आशिषा अनुगृह्णन् महात्मा उक्तवान्– "मम वचनं कदापि मिथ्या न भविष्यति। दिव्यपुरुषस्य मुखे अपूर्वा कान्तिः दृश्यते। तया एव कान्त्या भवता सः दिव्यपुरुषः अभिज्ञातव्यः" इति।

धनपालः स्वसम्पत्तिं न्यायाधीशस्य समीपे न्यासरूपेण स्थापयन्– "अहं यस्य द्वारा सम्पत्तिप्राप्त्यर्थम् अधिकारपत्रं प्रेषयिष्यामि तस्मै एषा सम्पत्तिः दातव्या। तावत् एतस्याः सम्पत्तेः रक्षणं करणीयं भवता" इति निवेदितवान्।

अनन्तरं धनपालः अरण्यं गतवान्। कस्याश्चित् नद्याः तीरे कुटीरं निर्माय वसतिम् आरब्धवान्। तत्रत्यः परिसरः परमरमणीयः आसीत्। सस्यश्यामला भूमिः तत्रत्या। दिव्यपुरुषस्य आगमनं प्रतीक्षमाणः धनपालः तत्र तृप्त्या जीवनं यापयति।

धनपालस्य कुटीरस्य समीपे कानिचन शबरकुटुम्बानि निवसन्ति। ते शबरजातीयाः सरलाः निष्कल्मषहृदयाः च। ते प्रतिदिनं धनपालाय मधु-फलादीनि समर्पयन्ति स्म। अनन्तरं स्वस्य समस्यां निवेद्य परिहारोपायं प्रार्थयन्ति स्म। आरम्भे



धनपालः यथामति समस्यानां परिहारार्थम् उपायान् सूचितवान्। एतत्कारणतः शबरजातीयानां गमनागमनं तत्र अधिकं जातम्। अतः धनपालः पूर्वम् इव मनःशान्तिं न प्राप्नोति इदानीम्।

कदाचित् सः शबरनायकं जटाधरम् आहूय उक्तवान्– "दिव्यपुरुषस्य प्रतीक्षां कुर्वन् शेषायुष्यं शान्ततया यापयामि इति निश्चित्य अहम् अत्र आगतः। इदानीं भवज्जातीयानां गमनागमनतः मम मनःशान्तेः भङ्गः भवति। अतः इतःपरं मम समीपं कोऽपि यथा न आगच्छेत् तथा करोतु" इति।

धनपालस्य वचनं श्रुत्वा शबरनायकः जटाधरः उक्तवान्– "श्रीमन्! भवतः आज्ञां शिरसा वहामः वयम्। किन्तु एकाकितया भवतः स्थितिः मह्यं न रोचते। अतः अहं दशवर्षीयं मम पुत्रं भवत्समीपं प्रेषयिष्यामि। सः चतुरमतिः। भवतः सेवां कुर्वन् अत्रैव तिष्ठतु नाम सः। मम एषा प्रार्थना न निराकरणीया भवता" इति।

जटाधरस्य अनुरोधकारणतः धनपालः एतं प्रस्तावम् अङ्गीकृतवान्। सायङ्काले स्वपुत्रं कुटीरे त्यक्त्वा गतवान् जटाधरः।

तस्य बालकस्य नाम शिवः इति। सः प्रातःकालतः रात्रिपर्यन्तं श्रद्धया धनपालस्य सेवां करोति।

धनपालः किमपि चिन्तयन् कस्यापि प्रतीक्षां कुर्वन् तिष्ठति खलु? एतत् जानन् शिवः कदाचित् एतस्य कारणं पृष्टवान्।



तदा धनपालः हसन् शिवस्य हस्तं स्वहस्तेन गृहीत्वा तं पार्श्वे एव उपवेश्य उक्तवान्– "महात्मनः कस्यचित् कथनस्य अनुसारम् एकस्य दिव्यपुरुषस्य प्रतीक्षां कुर्वन् अस्मि" इति।

"दिव्यपुरुषः कथं भवति?" इति कुतूहलेन पृष्टवान् शिवः।

"अपूर्वाणि वस्त्राणि धृत्वा दिव्येन तेजसा प्रकाशमानः आकाशात् अवतरति दिव्यपुरुषः" इति उक्तवान् धनपालः।

दिव्यपुरुषस्य दर्शने शिवस्य अपि महत् कुतूहलम्। अतः सः अपि दिव्यपुरुषस्य प्रतीक्षां करोति।

दिनानि गतानि। धनपालस्य स्वास्थ्यं दिने दिने क्षीयमाणम् अस्ति। 'मम मरणकालः सन्निहितः' इति ज्ञातवान् धनपालः।

कदाचित् सः शिवं किमपि वक्तुम् इच्छन् तं स्वसमीपम् आहूतवान्। शिवः विनयेन आगत्य स्थितवान्। धनपालस्य दृष्टिः शिवस्य मुखे लग्ना। तत्र अपूर्वा कान्तिः दृश्यते!

धनपालः क्षणकालं स्तब्धः। स्वस्य अज्ञानम् अवगतं तेन। 'दिव्यपुरुषः अपूर्वाणि वस्त्राणि धृत्वा आकाशात् अवतरति' इति आलोचितवान् आसीत् खलु सः? सरले अल्पवयस्के बाले दिव्यपुरुषत्वं भवेत् इति न चिन्तितम् आसीत् तेन। अतः एतावन्ति दिनानि पार्श्वे एव स्थितवन्तम् अपि तम् अभिज्ञातुं न शक्तवान् आसीत् सः। 'महात्मना सूचितः दिव्यपुरुषः शिवः एव' इति निश्चयबुद्धिः उत्पन्ना धनपाले।

सः तत्क्षणे एव जटाधरं स्वसमीपम् आनाय्य तं सर्वं निवेदितवान्। अनन्तरम् अधिकारपत्रं लिखित्वा दत्त्वा न्यायाधिकारितः सम्पत्तिप्राप्तिमार्गं सूचितवान्। शिवः तस्य उत्तराधिकारी जातः।

सत्पात्रे सम्पत्तिः निक्षिप्ता इत्यतः धनपालः नितरां तृप्तः। एतया एव तृप्त्या सः इहलोकव्यापारं समापितवान्।





# चतुरा वनजा

वनजा सदापि इस्त्रीयुक्तानि वस्त्राणि धरति। धृतं वस्त्रं सदापि सम्यक् यथा तिष्ठेत् तथा जागरूकतया तिष्ठति सा।

वनजा स्वयम् इस्त्रीकरणं जानाति। सा स्नानगृहात् तप्ताङ्गारम् आनीय विशालतलयुते कलशे स्थापयति। अनन्तरं स्ववस्त्रम् उत्पीठिकायाः उपरि प्रसार्य तप्ताङ्गारयुक्तं तं कलशं लघुवस्त्रेण दृढं गृहीत्वा स्वस्य वस्त्रस्य उपरि चालयति। अतः एव वस्त्राणि इस्त्रीयुक्तानि भवन्ति।

वनजायाः वस्त्राणि दृष्ट्वा सर्वे प्रशंसां कुर्वन्ति। किन्तु वनजायाः मात्रे वनजायाः व्यवहारः सर्वथा न रोचते। सा कोपेन वदति– "एषा कदा वा कार्ये आसक्तिं प्रदर्शयति? सदापि क्रीडने अटने च मग्ना भवति। प्रतिदिनं श्रद्धया वस्त्रम् इस्त्रीयुक्तं करोति, सत्यम्। किन्तु तेन किं प्रयोजनम्? अन्येषां वस्त्रस्य इस्त्रीकरणं सर्वथा न इच्छति सा" इति।

एतत्सर्वं दृष्ट्वा वनजायाः पितामही कदाचित् पौत्रीं स्वसमीपम् आहूय 'एवं करणम् उचितं न' इति बोधितवती।

तदा वनजा उक्तवती– "भवत्या एतद्विषये किमपि उपदेष्टव्यं नास्ति। अहं यावत् साहाय्यं करोमि चेदपि मातुः तृप्तिः नास्ति। सदा मम निन्दने एव तस्याः आसक्तिः। अल्पवयस्का अहं समवयस्कैः सह क्रीडामि चेत् सा कोपं प्रदर्शयति। मम सर्वेषु व्यवहारेषु सा दोषं पश्यति। अतः सा मह्यं न रोचते। अहं तस्याः साहाय्यं न करोमि" इति।

पौत्र्याः वचनानि श्रुत्वा पितामही हसन्ती पुनः उक्तवती– "मातुः विषये कोपः अस्ति चेत् अस्तु नाम। अन्येषां साहाय्यं कर्तुं शक्यते खलु? तदपि किमर्थं न क्रियते?" इति।

तदा वनजा उक्तवती– "भवती वस्तुस्थितिं किञ्चिदपि न जानाति इत्यतः



एवं वदति। पिता सदापि किं वदति इति स्मरति वा भवती? 'वनजा अल्पवयस्का, तद्द्वारा कोऽपि कार्यं न कारयतु' इति वदति सः। यदि अहं कार्ये साहाय्यं कुर्यां तर्हि सः 'एषा सुकुमारी न' इति मन्येत। अत एव अहं तस्य साहाय्यं न करोमि। अग्रजः तु मां प्रीत्या न पश्यति। 'कार्यम् अजानती मूर्खा' इति मां निन्दति सः। अतः अहं तस्य साहाय्यं न करोमि। अन्या गृहसदस्या मम अनुजा। सा मत्तः नितराम् अल्पवयस्का। तथापि सा मम वचनानि न पालयति। मया सा लालनीया इति तस्याः इच्छा। या मम वचनं न पालयति तस्याः साहाय्यं मया किमर्थं वा करणीयम्? भवती एव वदतु" इति।

तदा हसन्ती पितामही उक्तवती– "एतावता किं सिद्धम्? भवती कस्यापि साहाय्यं कर्तुं न इच्छति इत्येव खलु?" इति।

"तथा सर्वथा नास्ति। साहाय्यदाने मम इच्छा अस्ति एव। पश्यतु, अहं भवत्याः वस्त्राणि इस्त्रीयुक्तानि कर्तुम् इच्छामि। किन्तु भवती शुचिनिष्ठाकारणतः तत् न इच्छति। अतः अहं भवत्याः साहाय्यम् अपि कर्तुं न शक्नोमि। एवम् अस्ति मम परिस्थितिः" इति उक्तवती वनजा।

"अहो, बुद्धिमत्ता भवत्याः! चतुरा खलु भवती" इति वदन्ती पितामही वनजाम् उन्नीय प्रीत्या चुम्बितवती।

तावता तत्र आगता वनजायाः माता उक्तवती– "अये चण्डि! अद्य रजकः सोमदेवः ग्रामे नास्ति इति श्रूयते। मया हरिद्राकुङ्कुमकार्यक्रमार्थं भूस्वामिनः गृहं गन्तव्यम्। मम कौशेयशाटिका इस्त्रीरहिता अस्ति। भवती एव तां किञ्चित् इस्त्रीयुक्तां कृत्वा ददातु रे। भवती तु तां कलां जानाति एव" इति।

"मया न शक्यते" इति कोपेन उक्तवती वनजा। तदा कुपिता माता पुत्रीं निन्दितुम् उद्युक्ता। एतत् श्रुत्वा पितामही स्नुषाम् उक्तवती– "एवं निन्दनेन किं प्रयोजनम्? बालानां द्वारा कार्यं कारणीयं चेत् मृदुभिः वचनैः प्रीत्या वक्तव्यम्। पदे पदे निन्दनेन ते अनुक्तग्राहिणः भवन्ति" इति।

"भवत्याः लालनेन एव सा एवं दौष्ट्यम्

आचरति। अस्तु, अहं तु मृदुव्यवहारं न जानामि। भवती एव तद्द्वारा मम शाटिकाम् इस्त्रीयुक्तां कारयतु तावत्'' इति उक्तवती वनजायाः माता।

''तद्द्वारा अवश्यं कारयामि। सा मम वचनं कदापि न निराकरोति'' इति उक्तवती पितामही।

''अल्पे एव काले ज्ञायते खलु सर्वम् अपि'' इति वदन्ती वनजायाः माता कार्यार्थं पाकशालां गतवती।

तस्याः निर्गमनस्य अनन्तरं पितामही पौत्रीम् उक्तवती– ''वत्से! भवती मातुः शाटिकाम् इस्त्रीयुक्तां करोति चेत् कौशेयनिचोलं प्राप्स्यति'' इति।

''कौशेयनिचोलः! अम्बा कदाऽपि मह्यं तादृशं न सीवयति'' इति उक्तवती वनजा।

''अये, किमर्थं तथा वदति? उपायेन सर्वं साधयितुं शक्यते'' इति वदन्ती पितामही वनजां समीपम् आहूय कर्णे कमपि उपायं सूचितवती।

एतस्य उपायस्य कार्यान्वयनविषये चिन्तयन्त्यौ आस्तां पौत्री पितामही च। तावता प्रतिवेशिनी आगत्य वनजायाः मातरं पृष्टवती– ''कौशेयशाटिकायाः क्रयणार्थम् आपणं गच्छन्ती अस्मि। भवती अपि आगच्छति वा मया सह?'' इति।

एतत् श्रुत्वा वनजायाः माता आश्चर्येण पृष्टवती– ''सद्यः एव भवती एकां कौशेयशाटिकां क्रीतवती आसीत् खलु?'' पुनः किमर्थं क्रयणम्?'' इति।



तदा दीर्घं निःश्वसन्ती सा प्रतिवेशिनी उक्तवती– "किं वदामि? सर्वं मम दुरदृष्टस्य फलम्। एषु दिनेषु बालाः नितरां बुद्धिमन्तः जाताः सन्ति। मम पुत्री बहोः कालतः वदन्ती आसीत्– कौशेयनिचोलः आवश्यकः इति। अहं निराकुर्वती आसम्। गतसप्ताहे सा माम् उक्तवती यत् भवत्याः शाटिकाम् अहम् एव इस्त्रीयुक्तां करोमि इति। अहम् एतत् अङ्गीकृत्य कौशेयशाटिकां दत्तवती। सा इस्त्रीकरणसमये बुद्ध्या मम शाटिकां कुत्रचित् दग्धां कृतवती" इति।

"एतेन तस्याः कः लाभः?" इति आश्चर्येण पृष्टवती वनजायाः माता।

"मया अपि आरम्भे तत् न ज्ञातम् आसीत्। तां शाटिकां सौचिकाय दत्त्वा तद्द्वारा मया तस्यै निचोलद्वयं कारितम्। तं निचोलं सख्यै प्रदर्शयन्ती मम पुत्री स्वेन कृतं समग्रं सखीं निवेदितवती। तत् मया कथमपि श्रुतम्। निचोलप्राप्त्यर्थम् एव सा मम शाटिकां दग्धां कृतवती इति ज्ञातम्" इति उक्तवती प्रतिवेशिनी।

एतत् श्रुत्वा आश्चर्यम् अनुभवन्ती वनजायाः माता– "अस्तु तावत्। सायम् आवां विपणिं गच्छाव" इति उक्त्वा प्रतिवेशिनीं प्रेषितवती।

एतावता तत्र आगता वनजा मातरम् उक्तवती– "अम्ब! शाटिकां ददातु। सम्यक् इस्त्रीयुक्तां कृत्वा दास्यामि" इति।

तदा तस्याः माता कोपेन पुत्रीं पश्यन्ती उक्तवती– "अरे! भवत्याः मनसि किम् अस्ति इति मया ज्ञातम्। भवत्या मम शाटिका न स्प्रष्टव्या। कदाचित् भवती इस्त्रीसमये मम शाटिकां दग्धां कुर्यात् चेदपि अहं भवत्यै कौशेयनिचोलं तु न सीवयेयम् एव" इति।

'पितामह्या सूचितः उपायः एतया कथं ज्ञातः?' इति अजानती वनजा आश्चर्यम् अनुभूतवती। तस्याः मातुः प्रतिवेशिन्याः च मध्ये कीदृशः वार्तालापः प्रवृत्तः इति न जानाति स्म खलु सा?





# जगन्नाथचरितम्

अश्वः येन मार्गेण नयति तेन मार्गेण गच्छन् अस्ति विद्यापतिः। कियत्कालम् एवं प्रयाणं प्रवृत्तम् इति तु न ज्ञायते। अन्ते अरण्यं समाप्तम्। विशालः अङ्गणप्रदेशः प्राप्तः।

इदानीं कस्यां दिशि गन्तव्यम् इति स्पष्टा कल्पना प्राप्ता विद्यापतिना। अतः मनसि निश्चिन्तताभावः उत्पन्नः। समीपे एव तेन स्फटिकसदृशेन जलेन युक्तः तडागः दृष्टः। तडागसमीपं गत्वा अश्वात् अवतीर्य शिलायाः उपरि उपविष्टवान् सः। छाया तु आसीत् एव।

ललितया सज्जीकृत्य दत्तं पाथेयं भुक्त्वा जलं पीत्वा किञ्चित् विश्रान्तिं स्वीकृतवान् विद्यापतिः। पुनः अरण्यं दृष्ट्वा विश्वावसुं ललितां च स्मृत्वा मनसि एव तयोः क्षमां प्रार्थयन् अश्वम् आरुह्य राजधानीं प्रति प्रयाणम् आरब्धवान्। सायङ्काले सः राजधानीं प्राप्तवान्।

विद्यापतेः आगमनं दूरात् एव ज्ञात्वा कश्चन अधिकारी राजानं निवेदितवान्। विद्यापतेः आगमनम् एव प्रतीक्षमाणः राजा सन्तोषेण उत्थाय आगत्य– "आगच्छतु। भवन्तं प्रतीक्षमाणः एव आसम्। यदर्थं गतं तत् कार्यं सिद्धं वा?" इति कातरतया पृष्टवान्।

"महाराज! यस्याः निमित्तम् अहं गतः सा प्रतिमा मया आनीता इति भावयामि। तथापि ...." इति वचनम् अर्धे स्थगितवान् विद्यापतिः।

"पण्डितवर्य ! निस्सङ्कोचं वदतु भोः।

मूर्तेः प्रतिष्ठापनम्।



इति भावयन् रुदन् स्यात्'' इति उक्तवान् विद्यापतिः।

''शान्तः भवतु विद्यापते! एषा चिन्ता एतत्क्षणे एव भवता परित्यक्तव्या। देवालयनिर्माणार्थं महान् व्ययः कृतः। सुदूरात् शिल्पिनः समागत्य सेवाभावनया कार्यं कृत्वा मन्दिरं निर्मितवन्तः। लोकक्षेमार्थम् एव अस्ति एतत् मन्दिरम्। लोककल्याणकार्ये कस्यचित् एकस्य द्वयोः वा खेदः यदि भवेत् तर्हि तत् गौणम्। अतः भवता चिन्ता न करणीया। अन्यच्च मया स्वप्ने दृष्टं यत् प्रकाशमानः कश्चन दारुखण्डः समुद्रेण तीरम् आनीतः इति। तादृशः दारुखण्डः अद्य प्रातः समुद्रतीरे प्राप्तः। भवता आनीता मूर्तिः विष्णोः अंशेन युक्ता खलु? तां मूर्तिं समुद्रतीरे प्राप्ते दारुखण्डे योजयित्वा आलये प्रतिष्ठापयिष्यामः। भवन्तं यः विश्वासेन दृष्टवान् सः महानुभावः अपि आगत्य तां मूर्तिं पश्यतु। एतेन सः निश्चयेन सन्तुष्टः भविष्यति। भवता कृतः दोषः तेन क्षालितः भविष्यति। अतः खेदः सर्वथा मास्तु भवतः'' इति उत्साहेन उक्तवान् राजा।

तावता तत्र स्थिताः मन्त्रिप्रभृतयः उक्तवन्तः– ''भवतः योजना युक्ता अस्ति महाराज! सः दारुखण्डः विग्रहनिर्माणार्थं योग्यः अस्ति'' इति।

अनन्तरक्षणे एव दश नाविकाः समुद्रतीरं गत्वा जले स्थितं तं दारुखण्डं तीरस्य उपरि

सत्कार्यसाधनसमये विघ्नाः समस्याः च सहजाः। भवता का समस्या सम्मुखीकृता? वदतु। तस्याः परिहारार्थं यथाशक्ति प्रयत्नं करिष्यामः'' इति उक्तवान् राजा।

''प्रभो! मम सङ्कटं परिहर्तुं प्रायः कोऽपि न शक्नोति। एषा मूर्तिः मया चौर्येण आनीता। यः मयि पूर्णतः विश्वस्य महता आदरेण स्वस्य अद्वितीयां कन्यां मह्यं दत्तवान् सोऽयं महात्मा मया वञ्चितः। तदीया मूर्तिः मया चोरिता। निष्कपटः सः सज्जनः तस्य पुत्री च मद्विषये किं चिन्तयतः इति न जानामि। क्षमानर्हः, परिहाररहितः अपराधः कृतः मया। एतावता मया कृतम् अकार्यं तत्र ज्ञातं स्यात्। सः सज्जनः 'सर्वनाशः जातः'

आनेतुं प्रयत्नं कृतवन्तः। किन्तु तैः न शक्तम्। तरणचतुराः केचन बलशालिनः दारुखण्डं बलेन नोदितवन्तः। तथापि प्रयोजनं न जातम्।

अन्ते दारुखण्डं रज्ज्वा बद्ध्वा रज्जोः अपरम् अन्तं नौकासु बद्ध्वा आकर्षणं कृतम्। तथापि दारुखण्डः अङ्गुलमात्रम् अपि न विचलितः।

एतत् दृष्ट्वा सर्वे आश्चर्यचकिताः। अग्रे किं करणीयम् इनि न ज्ञातं महाराजेन। विद्यापति-मन्त्रिणोः अपि एषा एव स्थितिः। 'जले प्लवमानः अल्पः दारुखण्डः एवम् अचलः कथम् अभवत्?' इति राज्ञः चिन्ता। 'यावत् दारुखण्डः तीरं न प्राप्नोति तावत् अहम् अन्यत्र कुत्रापि न गमिष्यामि' इति दृढसङ्कल्पं कृत्वा राजा समुद्रतीरे एव उपविष्टवान्।

सायङ्कालः गतः। रात्रिः आगता। राज्ञी सुवर्णमयशिबिकया आगत्य राजानं पृष्टवती– "प्रातःकालपर्यन्तम् अपि अत्रैव स्थास्यति वा भवान्?" इति।

"किं करणीयम् इति न ज्ञायते। अग्रे किं करणीयम् इति यावत् न ज्ञायते तावत् अत्रैव तिष्ठामि" इति उक्तवान् राजा। राज्ञी मौनम् आश्रितवती।

किञ्चित्कालानन्तरं राजा दारुखण्डं तीरं प्रति आनेतुं प्रयतमानान् उद्दिश्य उक्तवान्– "प्रयत्नं स्थगयन्तु" इति।




अनन्तरं विद्यापतिं स्वसमीपम् आनाय्य– "सः अपूर्वः दारुखण्डः किमर्थं न चलति इति ज्ञातं मया। भवता आनीतां प्रतिमां यः प्रतिदिनम् अरण्ये पूजयन् आसीत् तस्य महानुभावस्य समीपं मां नयतु" इति सूचितवान्।

विद्यापतिः मार्गं प्रदर्शयन् अग्रे प्रस्थितवान्। महाराजः मङ्गलद्रव्यैः सह मन्त्रिप्रभृतिभिः प्रमुखैः च सह तम् अनुसृतवान्। ते अरण्यमार्गेण विश्वावसोः वसतिम् उद्दिश्य गतवन्तः। अनन्तरदिने मध्याह्नसमये ते विश्वावसोः वसतेः पार्श्वे स्थितं पर्वतं प्राप्तवन्तः।

सामान्यतः विश्वावसोः वसतिः सदापि



शान्ततायुक्ता भवति। अद्यापि तत्र शान्तता अस्ति। किन्तु एषा न सहजा, अपि तु विलक्षणा। विषादच्छाया तत्र सर्वत्र प्रसृता अस्ति।

प्रतिदिनम् इव सूर्योदयात् पूर्वं गुहां गतः विश्वावसुः अल्पे एव काले प्रत्यागत्य पुत्रीं ललिताम् उद्दिश्य– "वत्से! भवत्या पतिः महत् अकार्यं कृतवान् भोः" इति वदन् दुःखावेगेन अधः पतितवान्।

ललिता दिग्भ्रान्ता सती पितुः समीपं धावितवती। विश्वावसोः किं जातम् इति अजानन्तः सेवकाः तम् अन्तः नीत्वा शैत्योपचारं कृतवन्तः। तदा विश्वावसुः मन्दं नेत्रे उद्घाट्य परितः दृष्ट्वा पुनः नेत्रे निमीलितवान्।

किं प्रवृत्तं स्यात् इति तर्कितवती ललिता। 'परम्परया पूजितः देवविग्रहः विद्यापतिना चौर्येण नीतः, अतः एव मम पितुः एतादृशी गतिः आगता' इति ज्ञातवती सा। 'विद्यापतिः अरण्ये कानिचन दिनानि स्थितवान् यत् तस्य कारणं प्रेमाभिमानादयः न आसन्, अपि तु अन्यदेव आसीत्' इति चिन्तयन्ती सा खेदम् अनुभूतवती।

मध्याह्नः सायङ्कालः च गतः। रात्रिः अपि आगता। तथापि विश्वावसुः नेत्रे न उन्मीलितवान्। ललिता निद्राहारम् अपि विस्मृत्य तस्य पार्श्वे एव उपविष्टवती। अनन्तरदिने उषःकाले विश्वावसुः मन्दम् उत्थाय गुहां प्रति प्रस्थितवान्। ललिता अन्ये बान्धवाः च तम् अनुसृतवन्तः। गुहां गतः विश्वावसुः मूर्तेः शिलापीठम् आलिङ्ग्य उच्चैः रोदनं करोति। यावत् निवेदितं चेदपि न उत्तिष्ठति। अन्ये किङ्कर्तव्यतामूढाः सन्तः मौनं स्थितवन्तः।

मध्याह्नसमये कश्चन शबरयुवकः धावन् आगत्य दीर्घं निःश्वसन्– "पर्वतमार्गेण केचन आगच्छन्तः सन्ति। तेषु महाराजः अपि अस्ति। कस्यापि हस्ते आयुधं न दृश्यते" इति निवेदितवान्।

किञ्चित्कालानन्तरम् अपरः कश्चित् आगत्य निवेदितवान्– "विद्यापतिः एव मार्गं प्रदर्शयन् तान् आनयन् अस्ति" इति।

तत् श्रुत्वा कश्चन मध्यवयस्कः शबरः कोपेन उक्तवान्– "दिव्यमूर्तेः चौर्येण तृप्तिः न जाता इति भाति। सर्वस्वम् अपहर्तुं ते आगच्छन्तः सन्ति" इति।

"अये! अन्यथा चिन्तनं न उचितम्। तेषु कस्यापि हस्ते आयुधं नास्ति इति श्रुतं खलु? अस्माकं स्वामिनं विश्वावसुं द्रष्टुम् एव आगच्छन्तः स्युः ते" इति उक्तवान् कश्चन शबरवृद्धः।



विश्वावसुः मन्दम् उत्थाय गुहायाः पुरतः नमस्कारभङ्ग्या स्थितवान्। राजा तं दूरात् एव दृष्ट्वा हस्तौ प्रसार्य वेगेन अग्रे आगत्य विश्वावसुं प्रीत्या आलिङ्गितवान्। अश्रूणि स्रावयन् सः शबरराजम् उक्तवान्– "महात्मन्! भक्ताग्रेसर! वस्तुतः विग्रहचोरः अहं, न तु विद्यापतिः। मां क्षन्तुम् अर्हति वा भवान्?" इति।

विश्वावसोः नेत्राभ्याम् अपि अश्रूणि स्रवन्ति। सः अश्रूणि मार्जयन् राज्ञः उपवेशनार्थं शिलां प्रदर्शितवान्। राजा शिलायाः उपरि उपविश्य– "विश्वावसो, प्रथमं मया उच्यमानं शृणोतु" इति उक्त्वा, पुरीतीरे कृतम् आलयनिर्माणं, स्वप्नसन्देशानुगुणं कृतं पण्डितप्रेषणं, विद्यापतिना कृतं कार्यं च विस्तरेण निवेद्य पुनः उक्तवान्– "विश्वावसो! अद्यावधि सः देवः भवद्वंशीयानां पूजां प्राप्नुवन् आसीत्। इतः परं सर्वेषां जनानां पूजा तेन स्वीकरणीया इति दैवेच्छा अस्ति इति भाति। एषा दिव्यमूर्तिः समुद्रात् प्राप्ते दारुखण्डे समीचीनतया योजनीया इति अस्माकं सङ्कल्पः। तदर्थं भवतः अनुज्ञा अपेक्षिता। अस्माभिः स्वप्रयत्नेन यद्यत् शक्यं तत्सर्वं कृतम्। भवतः साहाय्यं विना कार्यसिद्धिः न भविष्यति" इति।

विश्वावसुः अङ्गीकारपूर्वकं शिरः चालितवान्। अनन्तरं राजा दारुखण्डप्राप्तिं, तस्य आनयने कृतं प्रयत्नं,प्राप्तम् असाफल्यं च निवेद्य– "भवतः उपस्थितौ एव विग्रहस्य प्रतिष्ठापनं भवेत् इति देवेच्छा अस्ति। अतः भवता आलयसमीपम् आगत्य एतत् कार्यं निर्विघ्नतया यथा परिसमाप्येत तथा



मां क्षन्तुम् अर्हति भवती। यथा पूर्वं मया उक्तं तथा अचिरात् एव भवतीं राजधानीं नेष्यामि। तावत् सहनया तिष्ठतु" इति।

ललिता कटाक्षेण विद्यापतिं दृष्टवती। तस्याः मुखतः वचनानि न निर्गतानि।

राजा आत्मना सह आनीतानि मङ्गलद्रव्याणि फलपुष्पवस्त्रादीनि च पितापुत्र्योः पुरतः स्थापितवान्।

अनन्तरदिने राजा परिवारेण सह समुद्रतीरं गतवान्। विश्वावसुः नौकया गत्वा तं दारुखण्डं स्पृष्टवान्। तस्य नौकया सहैव दारुखण्डः तीरम् आगतः।

राजभटाः महता सन्तोषेण तं दारुखण्डं राजप्रासादं नीतवन्तः।

उपकर्तव्यम्" इति प्रार्थितवान्।

क्षणकालस्य मौनस्य अनन्तरं विश्वावसुः उक्तवान्– "प्रभो! भवतः आज्ञायाः अनुगुणम् अहं भवता सह आगन्तुं सिद्धः" इति।

राजा परमसन्तोषं प्राप्य विश्वावसुं पुनरपि प्रीत्या आलिङ्ग्य पार्श्वे स्थितां ललिताम् उक्तवान्– "वत्से! भवती पतिम् अन्यथा मा चिन्तयतु। महोन्नतस्य कार्यस्य निमित्तं तेन रहस्यं गोपितम्। अनौचित्यं तत्र किमपि अस्ति चेत् सः क्षन्तव्यः भवत्या" इति।

तत्रैव स्थितः विद्यापतिः ललिताम् उक्तवान्– "दैवकार्यार्थं मया दोषः कृतः।

अनन्तरदिने राजा शिल्पिनः आहूय पृष्टवान्– "एतस्मिन् दारुखण्डे कीदृशी मूर्तिः निर्मिता चेत् वरं भवेत्?" इति।

तदा शिल्पिनः उक्तवन्तः– "वयं शिलासु देवदेवीनां मूर्तीः निर्मातुं शक्नुमः। किन्तु दारुखण्डे मूर्तिनिर्माणं वयं सर्वथा न जानीमः। अज्ञाते विषये कथं वा मार्गम् उपदिशेम वयम्?" इति।

तस्मिन् एव समये तत्र कश्चन वृद्धः आगत्य– "महाराज! भवता निर्मिते आलये बलभद्र-सुभद्रासमेतस्य कृष्णस्य विग्रहः भवति चेत् वरं भवेत्। भगवतः सङ्कल्पः तथा अस्ति। अहं तादृशं विग्रहं दारुखण्डेन निर्माय दातुं सिद्धः अस्मि। किन्तु कश्चन

नियमः अस्ति मम। अहं दारुखण्डेन सह प्रकोष्ठं प्रविश्य द्वारपिधानं करिष्यामि। विग्रहनिर्माणकार्यस्य समाप्तेः अनन्तरम् अहम् एव द्वारम् उद्घाटयिष्यामि। एतन्मध्ये कोऽपि मां न आह्वयेत्'' इति उक्तवान्।

''एवं तर्हि भवतः आहारादीनां का व्यवस्था?'' इति पृष्टवान् राजा।

''कार्यस्य समाप्तेः अनन्तरम् एव आहारस्य स्वीकारः'' इति उक्तवान् वृद्धः।

राजा एतत् अङ्गीकृतवान्। राजभवनस्य कश्चन विशालः प्रकोष्ठः वृद्धाय शिल्पिने दत्तः। वृद्धः दारुखण्डेन सह प्रकोष्ठं प्रविश्य द्वारपिधानं कृतवान्। विग्रहनिर्माणकार्यम् आरब्धवान् च। बहिस्तात् काष्ठच्छेदनशब्दः श्रूयते। राज्ञी सदापि काष्ठच्छेदनशब्दं शृण्वती तिष्ठति।

कानिचन दिनानि अतीतानि। प्रकोष्ठात् इदानीं शब्दः न श्रूयते। अनन्तरदिने अपि शब्दः न श्रुतः। 'अन्नपानादिरहितस्य शिल्पिनः गतिः शोचनीया जाता स्यात्' इति भावयन्ती राज्ञी कृतककुञ्चिकया द्वारम् उद्घाट्य अन्तः गतवती।

श्रद्धया विग्रहकार्ये मग्नः शिल्पी राज्ञीं दृष्ट्वा क्षणमात्रेण अदृश्यः जातः। विग्रहस्य परिष्कारकार्यम् इतोऽपि न समाप्तम् आसीत्। तावता एव कार्यं स्थगितम्। देवशिल्पी विश्वकर्मा एव वृद्धरूपेण आगतः आसीत् इति जनाः भावितवन्तः। राज्ञी स्वस्य दोषार्थं पश्चात्तापम् अनुभूतवती।

सर्वं दैवाधीनम् इति वदन् राजा विद्यापतिना आनीतां दिव्यप्रतिमां कृष्णविग्रहस्य अन्तः योजयित्वा बलभद्र-सुभद्रासहितं तं विग्रहं नूतने मन्दिरे शास्त्रोक्तक्रमेण प्रतिष्ठापितवान्।

विद्यापतिः तदनन्तरं तत्कुटुम्बीयाः च तस्य विग्रहस्य अर्चकाः जाताः।

तस्मात् दिनतः आरभ्य पुरीस्थं जगन्नाथमन्दिरं विष्णुक्षेत्रेषु प्रमुखं सत् जगद्विख्यातम् अस्ति।

–(समाप्तम्)







# कुशाग्रमतिः

प्राचीनकाले स्पेयिनूदेशो पेड्रोकः नाम कश्चन बुद्धिमान् युवकः आसीत्। तस्मिन् देशें दृप्तवृषभयुद्धं विशेषतः प्रचलति स्म। धैर्यवन्तः बलशालिनः दृप्तवृषभेण सह युद्धं कुर्वन्तः जनान् रञ्जयन्ति स्म। दृप्तवृषभस्य कोपं वर्धयितुं केचन आरम्भे वृषभं शूलाद्यायुधेन पीडयन्ति स्म। यदा क्रुद्धः दृप्तवृषभः फूत्कुर्वन् तुम्फनार्थम् आगच्छति तदा एते समीपस्थां भित्तिं, समीपस्थं वृक्षं वा आरुह्य स्वस्य रक्षणं कुर्वन्ति स्म।

एतादृशेषु युवकेषु पेड्रोकः अपि अन्यतमः। सः वृषभं कोपयित्वा विद्युद्गत्या पलाय्य कपिः इव शाखां गृहीत्वा आत्मानं रक्षति स्म। अत एव जनाः तं 'कुशाग्रमतिः कपिः' इत्येव आह्वयन्ति स्म।

'देशविदेशेषु सञ्चारः करणीयः। तद्द्वारा अपूर्वाः विषयाः ज्ञातव्याः' इति पेड्रोकस्य इच्छा। कदाचित् सः कस्यचित् नाविकस्य मैत्रीं सम्पादितवान्। अनन्तरं तस्य साहाय्येन स्वदेशात् प्रस्थाय चीनादेशं प्राप्तवान् पेड्रोकः।

तस्मिन् काले काचित् महाराज्ञी चीनादेशं परिपालयन्ती आसीत्। सा परमसुन्दरी आरोग्यवती दृढकाया च। कदाचित् तस्याः दीर्घेषु केशेषु रजतशलकासदृशः एकः श्वेतः केशः दृष्टिगोचरः जातः।

राज्ञी दर्पणस्य पुरतः स्थित्वा केशानां मध्ये स्थितं तं रजतशलाकासदृशम् अपूर्वं केशं दृष्टवती। सा क्षणकालं चिन्ताक्रान्ता जाता। अनन्तरं किमपि निश्चित्य तत्क्षणे एव ज्योतिषिकान् आनायितवती।

ज्योतिषिकाः श्वेतकेशवार्तां ज्ञात्वा परस्परं मिलित्वा एतद्विषये सुदीर्घां चर्चां कृतवन्तः। अन्ते खिन्नाः सन्तः महाराज्ञीं निर्निमेषं पश्यन्तः स्थितवन्तः च।

'ज्योतिषिकाः किमर्थम् एवं व्यवहरन्ति?'

"स्पेनूदेशीया जानपदकथा"



इति न ज्ञातं महाराज्ञ्या। सा कुतूहलेन कम्पमानेन स्वरेण पृष्टवती– "आर्याः, किमर्थं मौनम्? श्वेतकेशदर्शनस्य किं फलम्?" इति।

तदा कश्चन वृद्धः ज्योतिषिकः उत्थाय उक्तवान्– "एषा घटना अशुभकरी अस्ति महाराज्ञि! भाविनीं दुर्घटनां सूचयति एतत्" इति।

एतत् श्रुत्वा राज्ञी दिग्भ्रान्ता सती उक्तवती– "एवं वा? दुर्घटनायाः निवारणार्थं कः उपायः इत्यपि परिशील्य सूचयन्तु कृपया" इति।

तदा सर्वे ज्योतिषिकाः एकेन स्वरेण उक्तवन्तः– "वयम् असहायाः महाराज्ञि। ज्योतिषग्रन्थेषु एतस्य अपायस्य निवारणार्थं कोऽपि उपायः न सूचितः" इति।

एतत् श्रुतवत्याः महाराज्ञ्याः मुखं म्लानं जातम्। राज्ञ्याः मुखस्य म्लानतां तत्रत्यः कोऽपि न इच्छति। किन्तु म्लानतायाः निवारणार्थं कः उपायः इति कोऽपि न जानाति।

तस्मिन् समये कश्चन युवकः ज्योतिषिकः उत्थाय उक्तवान्– "महाराज्ञि! मया कश्चन विषयः ज्ञातः अस्ति। किन्तु स च विषयः कथं वक्तव्यः इत्येव मम चिन्ता" इति।

"चिन्ता मास्तु। निस्सङ्कोचं वदतु तावत्" इति सूचितवती राज्ञी।

"भवत्याः केशस्य द्वारा काचित् दुष्टा शक्तिः भवतीं प्रविष्टवती अस्ति। अतः भवत्या महती वेदना अनुभोक्तव्या भविष्यति" इति दुःखेन उक्तवान् सः युवकः ज्योतिषिकः।

एतत् श्रुतवत्याः महाराज्ञ्याः हृदये अपि वेदना उत्पन्ना। सा तां वेदनाम् अन्तः एव निगृह्णती एकं रत्नहारं स्वकण्ठतः निष्कास्य तस्मै युवज्योतिषिकाय दत्त्वा आसनात् उत्थाय मौनम् अन्तःपुरं प्रविष्टवती।

'राज्ञ्या काचित् आपत् सम्मुखीकरणीया' इति श्रुत्वा राजपरिवारजनाः खिन्नाः। ते रोदनम् एव आरब्धवन्तः।

किमपि चिन्तयन् राजमार्गेण गच्छन् आसीत् पेड्रोकः। तदा पृष्ठभागतः एतत्

रोदनम् अकस्मात् श्रुतं तेन। जनानां धावनम् अपि दृष्टम्। एतत् दृष्ट्वा पेड्रोकः चिन्तितवान् यत् कोऽपि दृप्तवृषभः पृष्ठतः आगच्छन् अस्ति इति। अतः सः झटिति उत्प्लुत्य राजभवनस्य वातायने उपविष्टवान्। रक्षकभटाः तं गृहीत्वा मुख्यमन्त्रिणः समीपं नीतवन्तः।

सः वृद्धः प्रधानमन्त्री विदेशीयभाषाः अपि किञ्चित् किञ्चित् जानाति स्म। अतः सः पेड्रोकं विदेशात् आगतं ज्ञात्वा पृष्टवान्— "कः भवान्? कस्मात् देशात् आगतः? किमर्थम् आगतः?" इति।

तेषां सर्वेषां प्रश्नस्य एकम् एव उत्तरं पेड्रोकस्य— "अहं कुशाग्रमतिः कपिः" इति।

एषः कश्चन कुशाग्रमतिः तरुणः इति भावितवान् सः प्रधानमन्त्री। अतः सः पेड्रोकं पृष्टवान्— "भवान् कुशाग्रमतिः वा? महाराज्ञ्याः उपरि आगतां विपदं दूरीकर्तुम् अर्हति वा भवान्?" इति।

"कीदृशी आपत् आगता?" इति तं वृद्धमन्त्रिणं पृष्टवान् पेड्रोकः।

वृद्धमन्त्री सर्वं निवेदितवान्। तत् श्रुत्वा पेड्रोकः उक्तवान्— "क्षणमात्रेण एतां निवारयिष्यामि अहम्" इति।

एतत् उत्तरं श्रुत्वा वृद्धमन्त्री नितरां सन्तुष्टः। अनन्तरं पेड्रोकेण सह महाराज्ञ्याः समीपं गतवान् मुख्यमन्त्री। राज्ञीं निवेदितवान् सः— "महाराज्ञि! एषः तरुणः जगति एव ख्यातः कुशाग्रमतिः। काचित् प्रबला शक्तिः एतम् अत्र आनीतवती। एषः





अत्र आनीतः यत् तत् अस्माकं सौभाग्यम्" इति।

राज्ञीं साष्टाङ्गं नमस्कृतवान् पेड्रोकः। तम् उक्तवती महाराज्ञी– "अये कुशाग्रमते! उत्तिष्ठतु तावत्" इति।

राज्ञी चीनीभाषया उक्तवती आसीत् खलु? पेड्रोकः चीनीभाषां किञ्चिदपि न जानाति। अतः सः नमस्कारभङ्ग्या एव तिष्ठन् मुख्यमन्त्रिणं पृष्टवान्– "श्रीमन्! महाराज्ञी किम् उक्तवती?" इति।

"आपत्तिवारणयत्ने भवान् असफलः यदि भवेत् तर्हि भवतः शिरः कर्तितः भवेत् इति भवन्तं सूचयितुं माम् उक्तवती" इति उक्तवान् मुख्यमन्त्री।

महाराज्ञी मुख्यमन्त्रिणं पृष्टवती– "एषः कुशाग्रमतिः तरुणः किं वदन् अस्ति?" इति।

"उपस्थिताम् आपदं क्षणमात्रेण निवारयिष्यामि। अतः कार्यारम्भार्थम् अनुमतिः दातव्या इति निवेदयति एषः" इति राज्ञीम् उक्तवान् मुख्यमन्त्री।

"मन्त्रिवर्य! एवं तर्हि विलम्बः किमर्थम्? एतत्क्षणे एव सः आपदः निवारणार्थं कार्यं कर्तुम् अर्हति" इति सूचितवती राज्ञी।

मुख्यमन्त्री राज्ञ्याः आशयं पेड्रोकं निवेदितवान्। पेड्रोकः उत्थाय राज्ञ्याः समीपं गतवान्। कोमलानां कृष्णवर्णीयानां केशानां मध्ये स्थितं तं श्वेतं केशम् अङ्गुलीभिः गृहीतवान्। राज्ञीं नेत्रनिमीलनं कर्तुम् उक्तवान्। अनन्तरं तं श्वेतकेशं जागरूकतया उत्पाट्य मन्त्रम् इव अस्पष्टं किमपि वदन् तं केशं मुखवायुना प्रेरितवान्। केशः वातायनमार्गेण निर्गतः कुत्रापि अदृश्यः अभवत्। एतत् मन्त्रिप्रभृतिभिः सर्वैः दृष्टम्।

मन्त्रिणः सूचनायाः अनन्तरं नेत्रे उन्मीलितवती राज्ञी महता सन्तोषेण मुख्यमन्त्रिणम् उक्तवती– "मन्त्रिवर्य! एषः तरुणः अद्वितीयः बुद्धिमान्। एतादृशं श्रेष्ठम् इतः प्रेषयितुम् अहं न इच्छामि। एतादृशस्य साहाय्येन अस्माकं देशस्य विशेषप्रगतिः सिध्येत्। अतः एतं मुख्यमन्त्रिणं कृतवती अस्मि। भवान् तस्मात् स्थानतः च्युतः अस्ति। परम्परायाः अनुगुणं मन्त्रिस्थानात् च्युतस्य भवतः शूलारोपणं भविष्यति। एषः

कार्यक्रमः महता वैभवेन यथा प्रचलेत् तथा व्यवस्था करणीया भवता। भवतः आत्मा शान्तिं यथा प्राप्नुयात् तथा कर्तुं सर्वत्र पूजाव्यवस्था भवेत्। एतदर्थम् अपि योग्यां व्यवस्थां करोतु" इति।

एतत् वचनं श्रुत्वा नितरां भीतः अभवत् वृद्धः मन्त्री। स्वेदेन आर्द्रः सः। एवं किमर्थं जातम् इति न ज्ञातं पेड्रोकेण। सः मुख्यमन्त्रिणं पृष्टवान्– "किं प्रवर्तते श्रीमन्?" इति।

तदा मन्त्री देशे स्थितं सम्प्रदायम्, उपस्थितं स्वस्य मरणदण्डनं च विस्तरेण पेड्रोकं निवेदितवान्। 'अहं कथञ्चित् रक्षणीयः भवता' इति प्रार्थितवान् अपि।

पेड्रोकः क्षणकालम् आलोच्य मन्त्रिणम् उक्तवान्– "श्रीमन्! काऽपि भीतिः मास्तु भवतः। भवन्तम् अहं रक्षामि। भवान् राज्ञीं निवेदयतु यत् भवान् मम साहाय्यकः भवति चेदेव अहं मन्त्रिपदवीम् अङ्गीकरोमि, अन्यथा वायुरूपेण इतः निर्गमिष्यामि इति" इति।

पेड्रोकस्य वचनं श्रुत्वा वृद्धः मन्त्री तृप्त्या दीर्घं निःश्वसितवान्। पेड्रोकेण उक्तं राज्ञीं निवेदितवान् चापि।

एतत् श्रुत्वा राज्ञी उक्तवती– "एवं वा? कुशाग्रमतिना यत् उक्तं तत् अवश्यम् अङ्गीक्रियते मया। तदर्थं सम्प्रदायम् अपि परित्यक्तुम् अहं सिद्धा एव। अतः भवतः मरणदण्डनं न प्रचलिष्यति। इतःपरं कस्यापि मन्त्रिणः मरणदण्डनम् अपि न भविष्यति। नूतमन्त्रिस्वीकारकार्यक्रमः महता वैभवेन प्रचलतु नाम" इति।

"अनुगृहीतोऽस्मि" इति कृतज्ञतापूर्वकं राज्ञीं नमस्कृतवान् वृद्धः मन्त्री।

एतदनन्तरं पेड्रोकः मुख्यमन्त्री जातः। अल्पे एव काले सः चीनीभाषाम् अभ्यस्तवान्। प्राप्तवयस्कां वृद्धमन्त्रिणः पुत्रीं परिणीतवान् चापि। आत्मनः कुशाग्रमतित्वं सार्थकं कुर्वन् सः बुद्धिमत्तया कार्यं कुर्वन् कीर्तिं प्राप्य चिरकालं सुखेन जीवितवान्।



# वाणिज्यतन्त्रम्

राजशेखरः नाम कश्चित् वणिक् घृतवाणिज्येन प्रभूतं धनं सम्पादयन् आसीत्। तस्य द्वौ पुत्रौ। ज्येष्ठस्य पुत्रस्य नाम नीलकण्ठः इति। कनिष्ठस्य पुत्रस्य नाम राजारामः इति। स्वमरणसमये राजशेखरः पुत्रौ स्वसमीपम् आहूय बोधितवान्– "वाणिज्ये अन्याय्यं कदापि न करणीयम्। अन्याय्येन प्राप्तं धनं चिरकालं न स्थास्यति" इति।

एतदनन्तरम् अल्पे एव काले राजशेखरः दिवङ्गतः। नीलकण्ठः राजारामः च पृथक् पृथक् घृतवाणिज्यम् आरब्धवन्तौ। कनिष्ठस्य राजारामस्य आपणे वाणिज्यं सम्यक् प्रचलति। तदीयाः ग्राहकाः दिने दिने वर्धन्ते। किन्तु नीलकण्ठस्य वाणिज्यं सामान्यतः अस्ति। तदीयग्राहकाणां सङ्ख्यायां दिने दिने ह्रासता दृश्यते।

कदाचित् नीलकण्ठः राजारामस्य समीपं गत्वा पृष्टवान्– "आवां द्वावपि समानं घृतं समानेन मूल्येन विक्रीणीवहे। तथापि भवतः आपणे ग्राहकाणां सम्मर्दः दृश्यते। मम आपणे च ग्राहकाणां विरलता दृश्यते। एतत् किमर्थम्?" इति।

तदा मन्दहासं प्रकटयन् राजारामः उक्तवान्– "एतस्य विशिष्टं कारणं किमपि नास्ति। कारणज्ञानार्थं भवान् एव मम आपणे स्थितानि घृतपात्राणि पश्यतु" इति। नीलकण्ठः घृतपात्राणि दृष्टवान्। तेषाम् उपरि मूल्यचिटिका लेपिता आसीत्। मूल्यचिटिका प्रदर्शयति स्म 'मूल्यं त्रिंशत् रूप्यकाणि' इति।

एतत् दृष्ट्वा आश्चर्येण पृष्टवान् नीलकण्ठः– "किम् एतत् अनुज? नवविंशतिरूप्यकमूल्यकस्य घृतस्य विक्रयणं त्रिंशद्रूप्यकैः कुर्वन् अस्ति खलु भवान्? एतत् अन्याय्यं न वा?" इति।

"अग्रज! भवान् एतत् अन्याय्यं भावयति। किन्तु जनाः एतत् एव विश्वासार्हतां भावयन्ति। मूल्यम् एकं रूप्यकं यावत् वर्धनेन जनाः चिन्तयन्ति यत् मम आपणस्य घृतम् एव उत्तमम् इति। एतावदेव न, जनाः मम योग्यतायाः प्रशंसां कुर्वन्ति अपि" इति उक्तवान् राजारामः।



# काश्मीरसमस्यायाः पृष्ठभूमिः




अस्माकं पुराणैः ज्ञायते यत् कश्यपमुनेः नाम्नः कारणतः काश्मीरम् इति नाम आगतम् इति।

प्राचीने भारते बहूनि लघूनि राज्यानि आसन्, यानि च अल्पसामर्थ्यवद्भिः राजभिः पाल्यते स्म। किन्तु विशेषः नाम

एतानि राज्यानि अखण्डस्य भारतस्य अङ्गानि इति भावना आसीत् तदा।

स्वातन्त्र्यसङ्ग्रामस्य अन्तिमे भागे महम्मद् अली जिन्नावर्यस्य नायकत्वे 'मुस्लिम् लीग्' संस्थया प्रतिपादितं यत् मुसल्मानानां निमित्तं पृथक् स्वतन्त्रं राज्यम् आवश्यकम् इति। विभाजकनीतौ आदरवन्तः आंग्लेयाः जिन्नावर्यं प्रोत्साहितवन्तः। तस्मिन् काले बहवः मुसल्माननायकाः अपि उक्तवन्तः यत् मताधारेण देशस्य विभाजनं न उचितम् इति। तथापि जिन्नावर्यस्य दुराग्रहकारणतः भारतं द्विधा विभक्तम्। पाकिस्थानस्य उदयः जातः।

तेषु दिनेषु जम्मूकाश्मीरप्रदेशस्य शासकः आसीत् राजा हरिसिंहः। इदानीं तस्य मनसि द्वैधीभावः – कः पक्षः आश्रयणीयः इति। तस्मिन् एव समये पाकिस्थानीयाः केचन पर्वतवासिनः काश्मीरस्य उपरि आक्रमणं कृतवन्तः। काश्मीरे मुसल्मानाः एव अधिक-सङ्ख्याकाः। तेषां तदा नायकः आसीत् शेक् अब्दुल्ला। तस्य मार्गदर्शनस्य अनुसारं राजा हरिसिंहः निर्णीतवान् यत् काश्मीरं भारतेन सह स्थास्यति इति। अनन्तरं भारतेन सेना प्रेषिता। भारतेन आक्रमणकाराः प्रतिप्रेषिताः। किन्तु एतावता आक्रमणकारैः काश्मीरस्य अधिकांशः भागः स्वाधीनीकृतः आसीत्। भारतेन तदा एव स्वातन्त्र्यं प्राप्तम् आसीत् खलु? अतः सः शान्तिप्रियतां स्वनीतिं मन्यते स्म। आक्रमणकारैः वशीकृताः प्रदेशाः युद्धद्वारा प्रतिस्वीकरणीयाः चेत् रक्तप्रवाहः प्रवहेत्। एतेन शान्तिप्रियतायाः भङ्गः स्यात् इति आलोच्य भारतेन संयुक्तराष्ट्रसङ्घस्य सुरक्षापरिषत् प्रार्थिता यत् एतस्मिन् विषये निर्णयः दातव्यः इति।

पाकिस्थानेन एषः आक्रान्तः प्रदेशः 'स्वतन्त्रकाश्मीरम्' इति नाम्ना आहूतः। किन्तु अत्र अविद्या दारिद्र्यं च अधिकम्।

एकं तु स्पष्टं यत् मतस्य आधारेण देशस्य विभजनम् अनुचितम् इति। बङ्गलादेशस्य जनाः अपि मुसल्मानाः एव, तथापि ते पाकिस्थानतः पृथक् जाताः। अस्माकं देशे अपि मुसल्मानानां सङ्ख्या न न्यूना। किन्तु एषा वस्तुस्थितिः बहुभिः न अवगम्यते इति तु खेदावहः विषयः।

बहवः इदानीं काश्मीरीयेषु जनेषु अनुचिताम् आशां जागरयन्तः सन्ति। जनानाम् अपहरणं मारणं च ये कुर्वन्ति तादृशानां भयोत्पादकानां प्रशिक्षणादिना साहाय्यं कुर्वन्तः देशे शान्तेः भङ्गं कुर्वन्तः सन्ति, देशद्रोहम् आचरन्तः सन्ति च।

एतादृशैः एव कारणैः अद्य काश्मीरविषये बह्व्यः समस्याः बहूनि कष्टानि च उत्पन्नानि सन्ति।



# नूतनः मण्डलाधिकारी

कर्णाटके पूर्वं चामुण्डरायः राजा आसीत्। गुण्डार्यः तस्य राजपुरोहितः। राजा तस्य विषये नितरां सन्तुष्टः अस्ति। कदाचित् राजा गुण्डार्यम् उक्तवान्– "अद्यावधि भवता अस्मदीयानि सर्वाणि देवकार्याणि श्रद्धया कारितानि। अतः अहं भवतः विषये नितरां सन्तुष्टः अस्मि। भवतः मनसि काऽपि इच्छा अस्ति चेत् वदतु। पूरयिष्यामि" इति।

तदा गुण्डार्यः उक्तवान्– "महाराज! भवतः कृपया मम जीवने काऽपि न्यूनता नास्ति। तथापि मम मनसि बहोः कालतः एका इच्छा अस्ति यत् मण्डलाधिकारी सन् कतिचन दिनानि अधिकारं चालयिष्यामि इति। भवतः आक्षेपः यदि न स्यात् तर्हि मम एताम् इच्छां पूरयतु" इति।

महाराजः मन्दहासपूर्वकम् उक्तवान्– "अस्तु, भवतः इच्छां पूरयिष्यामि" इति।

तस्मिन् समये देवगिरिप्रदेशे मण्डलाधिकारी नियोक्तव्यः आसीत् महाराजेन। अतः तस्मिन् स्थाने गुण्डार्यं नियुक्तवान् सः।

गुण्डार्यः ऐदम्प्राथम्येन शासनकार्ये पदं स्थापयन् अस्ति इत्यतः संक्षेपेण अपेक्षितसूचनाः सूचिताः चेत् वरं इति चिन्तितवान् महाराजः।अतः सः संक्षेपेण त्रीन् अंशान् सूचितवान्।

प्रथमः अंशः– मण्डलाधिकारी सदापि मुखं कृष्णीकृत्य तिष्ठेत् इति। तात्पर्यं तु – अन्येभ्यः सः दूरं तिष्ठेत्, यतः अन्येषां मैत्री एव पक्षपातप्रवृत्तेः कारणं भवेत् इति।

द्वितीयः अंशः – मण्डलाधिकारी अन्येषां कर्णं लुण्ठयेत् इति। तात्पर्यं तु – लघुभिः दण्डनैः कर्मकराः सदापि जागरूकाः यथा तिष्ठेयुः तथा करणीयम् इति।

"पञ्चविंशतिवर्षेभ्यः पूर्वं चन्दमामायां प्रकाशिता कथा"



देवगिरिस्थाः राजोद्योगिनः एतां वार्तां श्रुत्वा नितरां सन्तुष्टाः। नूतनस्य मण्डलाधिकारिणः स्वागतार्थं ते तत्क्षणे एव व्यवस्थां कृतवन्तः।

नूतनः मण्डलाधिकारी गुण्डार्यः प्रातः एव गृहात् प्रस्थितवान्। नित्योपयोगिवस्त्रादीनां कश्चन ग्रन्थिः तस्य शिरसि आसीत्। सः पादाभ्याम् एव सुखेन अग्रे गतवान्। अतः देवगिरिप्राप्तौ सहजतया महान् विलम्बः जातः एव। नगरद्वारे प्रातःकाले एव राजोद्योगिनः स्वागतार्थम् उपस्थिताः आसन्। मध्याह्नः जातः चेदपि नवीनस्य मण्डलाधिकारिणः दर्शनं नास्ति। कठोरस्य आतपस्य तापेन ते नितरां श्रान्ताः।

तृतीयः अंशः – अन्येषां शिखा मण्डलाधिकारिणः हस्ते स्यात् इति। तात्पर्यं तु – अन्ये सदाऽपि स्वाधीन्ये स्थापनीयाः। समये प्राप्ते, तेषां दौर्बल्यं प्रकाश्य ते निग्रहणीयाः इति।

राज्ञा संक्षेपेण सूचितान् अंशान् जागरूकतया श्रुत्वा गुण्डार्यः उक्तवान्– "सर्वम् अवगतं महाराज! भवता यथा सूचितं तथा करिष्यामि" इति।

अनन्तरम् अधिकारपत्रं स्वीकृत्य गुण्डार्यः महता सन्तोषेण गृहं गतवान्। गुण्डार्यस्य निर्गमनस्य अनन्तरं राजा देवगिरिं प्रति वार्तां प्रेषितवान् यत् नूतनः मण्डलाधिकारी श्वः आगत्य अधिकारसूत्रं ग्रहीष्यति इति।

मध्याह्नसमये गुण्डार्यः तत्र आगतः। राजधानीमार्गेण आगच्छन्तं तं दृष्ट्वा ते राजोद्योगिनः चिन्तितवन्तः यत् एषः पृष्टः चेत् नूतनस्य मण्डलाधिकारिणः आगमनविषये किमपि किञ्चित् ज्ञायेत इति।

कश्चन अधिकारी गुण्डार्यस्य समीपं गत्वा पृष्टवान्– "पण्डितवर्य! वयं नूतनस्य मण्डलाधिकारिणः प्रतीक्षां कुर्वन्तः स्मः। सः आगच्छन् अस्ति वा न वा इति भवता किमपि ज्ञातं वा? यतः भवान् राजधानीतः एव आगच्छन् अस्ति इति भाति" इति।

तदा गुण्डार्यः शिरस्तः ग्रन्थिम् अवतार्य कटौ वस्त्रेण बद्धम् अधिकारपत्रं बहिः आनीय तस्य अधिकारिणः हस्ते स्थापितवान्।

एषः एव राज्ञा नियुक्तः मण्डलाधिकारी इति ज्ञात्वा ते अधिकारिणः आश्चर्यचकिताः। अधिकारपत्रम् अस्ति इत्यतः एतस्मिन् विश्वसनीयम् एव। अतः ते मङ्गलवाद्यैः सह तं गुण्डार्यं नगरस्य अन्तः नीतवन्तः। एतत् गौरवप्रदर्शनं दृष्ट्वा गुण्डार्यः नितरां सन्तुष्टः।

नूतनस्य मण्डलाधिकारिणः वसति-व्यवस्था तस्मिन् दिने कस्यचित् अधिकारिणः गृहे कल्पिता आसीत्। समीचीनं भोजनं परिविष्टं तत्र। भोजनानन्तरं गुण्डार्यः अधिकारिणं पृष्टवान्– "भोजनं समीचीनम् अस्ति। किन्तु ताम्बूलं कुत्र?" इति।



सः अधिकारी झटिति ताम्बूलम् आनाय्य विनयेन मण्डलाधिकारिणः पुरतः स्थापितवान्। ताम्बूलं स्वीकुर्वन् गुण्डार्यः पूर्वाभ्यासबलात् पृष्टवान्– "केवलं ताम्बूलं वा? दक्षिणा नास्ति वा?" इति।

सः अधिकारी न जानाति स्म यत् एषः नूतनः मण्डलाधिकारी गुण्डार्यः पूर्वं राजपुरोहितः आसीत् इति, दक्षिणासहितस्य ताम्बूलस्य स्वीकारः तस्य प्रवृत्तिः इति च। अतः सः चिन्तितवान् यत् एषः मण्डलाधिकारी आगमनसमनन्तरम् एव उत्कोचं प्रार्थयन् अस्ति इति। सः स्वप्रकोष्ठं गत्वा लघुस्यूतेन पञ्चशतं रूप्यकाणि आनीय मण्डलाधिकारिणे दत्तवान्।

द्वित्राणां रूप्यकाणां निरीक्षायां स्थितः मण्डलाधिकारी पञ्चशतं रूप्यकाणि प्राप्य परमाश्चर्यचकितः। सः अधिकारिणम् उक्तवान्– "साधु, अहम् अल्पे एव काले आगमिष्यामि। भवन्तः स्वकार्याणि कुर्वन्तः भवन्तु" इति। सः अधिकारी कार्यालयं गतवान्।

राज्ञः प्रथमा सूचना आसीत् खलु– मुखं कृष्णीकृत्य स्थातव्यम् इति। अतः गुण्डार्यः सेवकद्वारा कज्जलम् आनायितवान्। तेन मुखं कृष्णीकृत्य एषः नूतनः मण्डलाधिकारी कार्यालयं गतवान्। एतस्य एतादृशं विचित्रं रूपं दृष्ट्वा सर्वे उद्योगिनः आश्चर्यचकिताः भीताः च। किन्तु कोऽपि किमपि वक्तुं प्रष्टुं वा न शक्नोति।

राज्ञः द्वितीया सूचना आसीत् खलु –

अन्येषां कर्णः लुण्ठनीयः इति। अतः गुण्डार्यः एकम् उद्योगिनं स्वसमीपम् आहूतवान्। सः मौनं गुण्डार्यस्य समीपं गतवान्। गुण्डार्यः इतोऽपि समीपम् आगन्तुं सूचितवान्। सः गुण्डार्यस्य पार्श्वे स्थितवान्।

गुण्डार्यः तस्य उद्योगिनः कर्णं सम्यक् लुण्ठितवान्। सः उद्योगी वेदनां सोढुम् अशक्नुवन् चीत्कारं कृतवान्। अन्ये उद्योगिनः चिन्तितवन्तः यत् तेन कोऽपि अपराधः कृतः स्यात्, अतः मण्डलाधिकारी तं कर्णलुण्ठनेन दण्डितवान् इति।

इतः परं राज्ञः तृतीया सूचना पालनीया अस्ति, तावदेव। अन्येषां शिखा कथं हस्ते स्वीकरणीया इति विषये बहुधा चिन्तितवान् गुण्डार्यः। एवं चिन्तयन् उपविष्टः अस्ति मण्डलाधिकारी। अतः इतरे अधिकारिणः अपि स्वस्वस्थाने उपविष्टवन्तः सन्ति। सायङ्कालः जातः। रात्रिः अपि आगता। तथापि गुण्डार्यः स्वस्थानतः न उत्थितः। अतः सर्वे राजोद्योगिनः अपि आसने एव उपविष्टवन्तः। मध्यरात्रः अतीतः। सर्वे स्वस्वस्थाने एव निद्रां प्राप्तवन्तः। 'राज्ञः तृतीयसूचनायाः कार्यान्वयनार्थम् एषः सुसमयः' इति आलोचितवान् गुण्डार्यः। सः मन्दम् उत्थाय एकैकस्य अपि उद्योगिनः शिखां कर्तितवान्। एवं एवैषां शिखां प्राप्य सः समाधानेन निःश्वसितवान्।

'प्रथमे एव दिने सूचनाः कथम् अक्षरशः पालिताः इति निवेदितं चेत् राजा परमसन्तुष्टः भवेत्' इति आलोचितवान् गुण्डार्यः। अतः सः अनन्तरदिने प्रातःकाले एव राजधानीं प्रति प्रस्थितवान्।

राजधानीम् आगतः गुण्डार्यः राजानं दृष्ट्वा– "भवता दत्ता सूचनाः अक्षरशः पालिताः" इति गर्वेण उक्तवान्। तावता देवगिरितः कश्चन अधिकारी आगतः। नूतनस्य मण्डलाधिकारिणः कार्यशैलीं विस्तरेण निवेदितवान् सः। एतत् श्रुत्वा राजा आत्मना कृतम् अनौचित्यं ज्ञातवान्। गुण्डार्यं यथापूर्वं राजपुरोहितं कृतवान् सः।



शीतलस्य वायुमण्डलस्य पृष्ठतः स्थितः शीतलः शुष्कवायुः यदा उष्णतायुक्तेन वायुना घट्टितः भवति तदा मेघाः उद्धृताः सन्तः उपरि गच्छन्ति। मेघानां मध्ये स्थितम् अल्पपीडनं मेघान् एकत्रीकरोति यदा, तदा तेषां मध्ये सुरङ्गसदृशी रिक्तता निर्मिता भवति। भूमिं स्पृशन्ती एषा निरन्तरम् आवर्तमानः भयङ्करः झञ्झावातः भवति। धूलिपूर्णः एषः झञ्झावातः १३२० मैलु विस्तृतः, प्रतिघण्टं ३०० मैलु वेगेन अग्रे धावति। अमेरिकादेशे मध्यपश्चिमप्रदेशे वसन्तकाले प्रतिवर्षं माकिं १५० झञ्झावाताः वान्ति। १९६५ तमे वर्षे अत्र यः झञ्झावातः आगतः तेन द्विशतात् अधिकाः जनाः मृताः। आफ्रिका-रशियादेशेषु अपि घोरः परिणामः दृष्टः।







अमेरिकादेशे उटानामके स्थले स्थिते राष्ट्रियोद्याने प्रपञ्चस्तरे ख्यातानि बहूनि प्राकृतिकानि शिलातोरणानि दृश्यन्ते। तेषु केषाञ्चित् दैर्घ्यं २९१ द्वादशाङ्गुलम्। एतानि शिलातोरणानि १५ कोटिवर्षेभ्यः पूर्वं प्रकृत्या निर्मितानि इति तर्क्यते। सिकतामयशिलानां मध्ये यदा वृष्टिजलं प्रवहति तदा कुत्रचित् रन्ध्राणि भवन्ति। हिमं वायुः च एतानि रन्ध्राणि स्वगमनागमनेन विशालीकुर्वन्ति। ततः शिलातोरणानि निर्मितानि भवन्ति। वायुहिमादीनाम् आघातः इदानीम् अपि प्रवर्तते इत्यतः वयं सविश्वासं वक्तुं शक्नुमः यत् एतानि शिलातोरणानि कदाचित् पतेयुः एव इति।

# चित्रशीर्षिका-स्पर्धा * पारितोषिकं ५०/- रूप्यकाणि

## विजितां शीर्षिकां सप्टम्बर्-९० मासे प्रकटयिष्यामः।





* उपरितनं चित्रद्वयं पश्यन्तु। * युक्तां शीर्षिकां परस्पर-सम्बन्धि-वाक्यद्वयेन लिखित्वा जुलै-२० दिनाङ्कतः पूर्वम् एव प्रेषयन्तु। * अनन्तरम् आगताः शीर्षिकाः न परिशीलयिष्यामः। * स्पर्धायां विजेता ५०/- रूप्यकात्मकं पारितोषिकं प्राप्स्यति। * शीर्षिकाः समपत्रे (पोस्ट्-कार्ड्) लेखनीयाः। तत्र अन्यः विषयः न लेखनीयः। * अधोनिर्दिष्ट-सङ्केताय शीर्षिकाः प्रेषणीयाः–

**चन्दमामा (संस्कृतम्)**

**७३/२, 'अक्षरम्' रङ्गरावुमार्गः, शङ्करपुरम्, बेङ्गलूरु-५६०००४**

---

## 'मे'मासस्य चित्रशीर्षिकास्पर्धायाः परिणामः–

प्रथमचित्रम् - **वयोऽनुगुणं व्यवहारः**

द्वितीयचित्रम् - **वयोऽतीतः कार्यभारः।**

प्रेषकः - श्री डि.के. सुब्रह्मण्यं, ११८६, पि.सि. विस्तरणम्, कोलार-५६३१३१, कर्णाटकम्।


# चन्दमामा

वार्षिकं ग्राहकशुल्कं (भारते) रू. ३६-००

**डाल्टन् एजन्सीस्, चन्दमामा बिल्डिङ्ग्स्, वडपळनी, मद्रास्-६०००२६**

विदेशीय-ग्राहकशुल्क-विवरणार्थं लिखन्तु -

**चन्दमामा पब्लिकेषन्स्, चन्दमामा बिल्डिङ्ग्स्, वडपळनी, मद्रास्-६०००२६**

Printed by B.V. REDDI at Prasad Process Private Ltd., 188 N.S.K. Salai, Madras 600 026 (India) and Published by B. VISHWANATHA REDDI on behalf of CHANDAMAMA PUBLICATIONS, Chandamama Buildings, Vadapalani, Madras 600 026 (India). Controlling Editor: NAGI REDDI.


---

# कठिनशब्दानां सान्दर्भिकाः अर्थाः

अनुक्तग्राही - Disobedient
अलिप्तनीतिः - Non-alignment
अवगतम् - Understood
उत्पीठिका - Table
कज्जलम् - An unguent for the eye
कर्णलुण्ठनम् - Twisting the ear lobe
कर्तितवान् - Cut
कलशः - A small vessel
कार्पासः - Cotton
कुञ्चिका - Key
कुसीदवणिक् - Money-lender
कौशेयशाटिका - Silk saree
गणना - Account
गृध्रः - Eagle.
घृतम् - Ghee
तप्ताङ्गारः - Live charcoal
तलम् - Bottom
तुम्फनम् - Stabbing
दारुखण्डः - Piece of wood
निचोलः - Skirt
निर्दुष्टम् - Faultless
परिष्कारः - Polish
पाथेयम् - Packed food
पाशः - Noose
पितामही - Father's mother
प्रतीतिः - Time honoured belief
प्राकृतिकम् - Natural
मण्डलाधिकारी - Amildar(Today's Tahsildar)
मण्डूकः - Frog
महापूरः - Big flood
माकिम् - Approximately
रजकः - Washerman
लम्बकम् - Pendulum
लिपिकारः - Clerk
वातायनम् - Window
शिखा - Tuft
सङ्क्रामितवान् - Transferred
समाहिता - Convinced
सीवयतिं - Get stiched
सौचिकः - Tailor